१०. हि—वृद्धौ च । परस्मैपदी, अनिट् ।

दशलकारेषु—हिनोति[1] । जिघाय । हेता । हेष्यति । हिनोतु अहिनोत् । हिनुयात् । हीयात् । अहैषीत् । अहेष्यत् ।

११. आप्लृ—व्याप्तौ । परस्मैपदी, अनिट् ।

दशलकारेषु—आप्नोति । आप, आपतुः । आप्ता । आप्स्यति । आप्नोतु । आप्नोत् । आप्नुयात् । आप्यात् । आपत् । आप्स्यत्[2] ।

१२. शक्लृ—शक्तौ । परस्मैपदी, अनिट् ।

दशलकारेषु—शक्नोति[3] । शशाक, शेकतुः । शक्ता । शक्ष्यति । शक्नोतु । अशक्नोत् । शक्नुयात् । शक्यात् । अशकत् । अशक्ष्यत् ।

१३. राध—संसिद्धौ । परस्मैपदी, अनिट् ।

दशलकारेषु—राध्नोति । रराध, रेधतुः[4], रेधिथ । राद्धा । रात्स्यति । राध्नोतु । अराध्नोत् । राध्नुयात् । राध्यात् । अरात्सीत् । अरात्स्यत् ।

१४. साध—संसिद्धौ । राधवत् ।

१५. ञिधृषा—प्रागल्भ्ये । परस्मैपदी, सेट् ।

दशलकारेषु—धृष्णोति । दधर्ष । धर्षिता । धर्षिष्यति । धृष्णोतु । अधृष्णोत् । धृष्णुयात् । धृष्यात् । अधर्षीत् । अधर्षिष्यत् ।

---

1. "हिनुमीना"—प्रहिणोति ।

2. क्त—आप्तः । क्त्वा—आप्त्वा । तुमुन्—आप्तुम् । णिच्-आपयति । सन्—ईप्सति । व्याप्नोति—व्याप्त करता है । प्राप्नोति—प्राप्त करता है । समाप्नोति—समाप्त होता है ।

3. क्त—शक्तः । तुमुन्-शक्तुम् ।

4. "राधो हिंसायाम्" । से एत्वाभ्यास लोप ।

१६. दम्भु—दम्भने । परस्मैपदी, सेट् ।

दशलकारेषु—दभ्नोति । ददम्भ[1] । दम्भिता । दम्भिष्यति । दभ्नोतु । अदभ्नोत् । दभ्नुयात् । दभ्यात् । अदम्भीत् । अदम्भिष्यत् ।

१७. तृप—प्रीणने । परस्मैपदी, सेट ।

दशलकारेषु—तृप्नोति[2] । ततर्प । तर्पिता । तर्पिष्यति । तृप्नोतु । अतृप्नोत् । तृप्नुयात् । तृप्यात् । अतर्पीत् । अतर्पिष्यत् ।

१८. अशू—व्याप्तौ, संघाते च । आत्मनेपदी, वेट् ।

दशलकारेषु—अश्नुते । आनशे[3] । अशिता, अष्टा[4] । अशिष्यते, अक्ष्यते । अश्नुताम् । आश्नुत । अश्नुवीत । अशिषीष्ट, अक्षीष्ट । लुङ्—आशिष्ट, आशिषाताम्, आशिषत । आष्ट, आक्षाताम्, आक्षत । लृङ्—आशिष्यत, आक्ष्यत ।

। इति स्वादयः ।

---

1. श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा'' से कित ''दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ''—एत्वाभ्यासलोप । देभतुः, देभुः ।

2. ''क्षुभ्नादिषु च'' से णत्वनिषेध ।

3. ''अश्नोतेश्च'' से नुट् ।

4. ऊदित् होने से इट् विकल्प से ।

# अथ तुदादि प्रकरणम्

१. तुद्—व्यथने । उभयपदी, अनिट् ।

दशलकारेषु—तुदति–ते । तुतोद–तुतुदे । तोत्तासि–से । तोत्स्यति–ते । तुदतु–तुदताम् । अतुदत्–अतुदत । तुदेत्–तुदेत । तुद्यात्–तुत्सीष्ट[1] । अतौत्सीत्, अतौत्ताम्–अतुत्त, अतुत्साताम् । अतोत्स्यत्–त ।

२. णुद्—प्रेरणे । उभयपदी, अनिट् ।

दशलकारेषु—नुदति–ते । नुनोद–नुनुदे । नोत्तासि–से । नोत्स्यति–ते । नुदतु–नुदताम् । अनुदत–अनुदत । नुदेत्–त । नुद्यात्–नुत्सीष्ट । अनौत्सीत्–अनुत्त । अनोत्स्यत्–त ।

३. भ्रस्ज—पाके । उभयपदी, अनिट् ।

लट् पर.

| | | | |
|---|---|---|---|
| प्र० पु० | भृज्जति[2] | भृज्जतः | भृज्जन्ति |
| म० ,, | भृज्जसि | भृज्जथः | भृज्जथ |
| उ० ,, | भृज्जामि | भृज्जावः | भृज्जामः |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र० पु० | भृज्जते | भृज्जेते | भृज्जन्ते |
| म० ,, | भृज्जसे | भृज्जेथे | भृज्जध्वे |
| उ० ,, | भृज्जे | भृज्जावहे | भृज्जामहे |

---

1. "लिङ्सिचावात्मनेपदेषु" से कित् होने से आत्मनेपद लिङ् और लुङ् में गुण नहीं होगा ।

2. 'श' अपित्सार्वधातुक होने से ङिद्वत् है, अतः "ग्रहिज्या"—से सम्प्रसारण, श्चुत्व से शकार को जकार ।

लिट् पर०

| | | | |
|---|---|---|---|
| प्र० पु० | बभर्ज[1] | बभर्जतुः | बभर्जुः |
| म० ,, | बभर्जिथ-बभर्ष्ठ | बभर्जथुः | बभर्ज |
| उ० ,, | बभर्ज | बभर्जिव | बभर्जिम |

पक्षे

| | | | |
|---|---|---|---|
| प्र० पु० | बभ्रज्ज | बभ्रज्जतुः | बभ्रज्जुः |
| म० ,, | बभ्रज्जिथ-बभ्रष्ठ | बभ्रज्जथुः | बभ्रज्ज |
| उ० ,, | बभ्रज्ज | बभ्रज्जिव | बभ्रज्जिम |

आत्मनेपद

| | | | |
|---|---|---|---|
| प्र० पु० | बभर्जे | बभर्जाते | बभर्जिरे |
| म० ,, | बभर्जिषे | बभर्जाथे | बभर्जिध्वे |
| उ० ,, | बभर्जे | बभर्जिवहे | बभर्जिमहे |

पक्षे

| | | | |
|---|---|---|---|
| प्र० पु० | बभ्रज्जे | बभ्रज्जाते | बभ्रज्जिरे |
| म० ,, | बभ्रज्जिषे | बभ्रज्जाथे | बभ्रज्जिध्वे |
| उ० ,, | बभ्रज्जे | बभ्रज्जिवहे | बभ्रज्जिमहे |

लुट् पर०

| | | | |
|---|---|---|---|
| प्र० पु० | भर्ष्टा-भ्रष्टा | भर्ष्टारौ-भ्रष्टारौ | भर्ष्टारः-भ्रष्टारः |
| म० ,, | भर्ष्टासि-भ्रष्टासि | भर्ष्टास्थः-भ्रष्टास्थः | भर्ष्टास्थ-भ्रष्टास्थ |
| उ० ,, | भर्ष्टास्मि-भ्रष्टास्मि | भर्ष्टास्वः-भ्रष्टास्वः | भर्ष्टास्मः-भ्रष्टास्मः |

आत्मनेपद—भर्ष्टासे-भ्रष्टासे इत्यादि। लृट्—भर्क्ष्यति-ते-भ्रक्ष्यति-ते।

लोट् पर०

| | | | |
|---|---|---|---|
| प्र० पु० | भृज्जतु-तात् | भृज्जताम् | भृज्जन्तु |

1. "भ्रस्जो रोपधयो रमन्यतरस्याम्" से रम्।

| | | | |
|---|---|---|---|
| म० ,, | भृज्ज-तात् | भृज्जतम् | भृज्जत |
| उ० ,, | भृज्जानि | भृज्जाव | भृज्जाम |

आत्मने०

| | | | |
|---|---|---|---|
| प्र० पु० | भृज्जताम् | भृज्जेताम् | भृज्जताम् |
| म० ,, | भृज्जस्व | भृज्जेथाम् | भृज्जध्वम् |
| उ० ,, | भृज्जै | भृज्जावहै | भृज्जामहै |

लङ्—अभृज्जत्-अभृज्जत । वि० लिङ्—भृज्जेत्-भृज्जेत । आ० लिङ्—भृज्ज्यात्[1]-भ्रक्षीष्ट[2], भर्क्षीष्ट । लुङ्—अभार्क्षीत्[3], अभ्राक्षीत्-अभर्ष्ट, अभ्रष्ट[4] । लृङ्—अभर्क्ष्यत्-त, अभ्रक्ष्यत्-त ।

४. कृप—विलेखने । उभयपदी, अनिट् ।

दशलकारेषु—लट्—कृपति-ते । लिट्—चकर्प-चकृपे । लुट्—क्रष्टासि-से, कर्ष्टासि-से । लृट्—कर्क्ष्यति-ते, क्रक्ष्यति-ते । लोट्—कृपतु-कृपताम् । लङ्—अकृपत्-त । वि० लिङ्—कृपेत्-त । आशीर्लिङ्—कृप्यात्-कृक्षीष्ट । लुङ्—अक्राक्षीत्[5], अकार्क्षीत्, अकृक्षत्-अकृक्षत, अकृष्ट[6] । अक्रक्ष्यत्-त । अकर्क्ष्यत्-त ।

---

1. क्ङित् में रमागम को बाध कर पूर्वविप्रतिषेध से सम्प्रसारण ।

2. रमागम का विकल्प ।

3. हलन्तलक्षणवृद्धि, रमागमविकल्प से ।

4. अभर्ष्टाताम्-अभ्रष्टाताम् ।

5. "स्पृशमृशकृष तृप—" से सिच् विकल्प से, हलन्त लक्षण वृद्धि, रमागम का विकल्प । वस में क्ङित्वात् गुणाभाव ।

6. सिच् के सकार का "झलो झलि" से लोप, ष्टुत्व । अकृक्षाताम्, अकृक्षन्त ।

५. मिल—सङ्गमे । उभयपदी, सेट् ।

दशलकारेषु—मिलति-ते । मिमेल-मिमिले । मेलितासि-से । मेलिष्यति-ते । मिलतु-मिलताम् । अमिलत्-त । मिलेत्-त । मिल्यात्-मेलिषीष्ट । अमेलीत्-अमेलिष्ट । अमेलिष्यत्-त ।

६. मुच्लृ—मोचने । उभयपदी, अनिट् ।

दशलकारेषु—मुञ्चति-ते । मुमोच-मुमुचे । मोक्तासि-से । मोक्ष्यति-ते । मुञ्चतु-मुञ्चताम् । अमुञ्चत्-त । मुञ्चेत्-त । मुच्यात्-मुक्षीष्ट । अमुचत्[1]-अमुक्त[2], अमुक्षाताम् । अमोक्ष्यत्-अमोक्ष्यत ।

७. लुप्लृ—छेदने । उभयपदी, अनिट् ।

दशलकारेषु—लुम्पति-ते । लुलोप-लुलुपे । लोप्तासि-से । लोप्स्यति-ते । लुम्पतु-लुम्पताम् । अलुम्पत्-त । लुम्पेत-त । लुप्यात्-लुप्सीष्ट । अलुपत्[3]-त । अलोप्स्यत्-त ।

८. विद्लृ—लाभे । उभयपदी, सेट् ।

दशलकारेषु—विन्दति-ते । विवेद-विविदे । वेदितासि-से । वेदिष्यति-ते । विन्दतु-विन्दताम् । अविन्दत्-त । विन्देत्-त । विद्यात्-वित्सीष्ट । अविदत्-अवित्त । अवेत्स्यत्-त ।

९ षिच्—क्षरणे । उभयपदी, अनिट् ।

दशलकारेषु—सिञ्चति[4]-ते । सिषेच-सिषिचे । सेक्तासि-से । सेक्ष्यति-ते । सिञ्चतु-सिञ्चताम् । असिञ्चत्-त । सिञ्चेत्-त । सिच्यात्-

---

1. परस्मैपद में अङ् ।

2. आत्मनेपद में सलोप । क्त-मुक्तः । क्त्वा-मुक्त्वा । तुमुन्-मोक्तुम् । तव्य-मोक्तव्यः । क्तिन्-मुक्तिः । णिच्-मोचयति । सन्-मुमुक्षति ।

3. अङ् । क्त-लुप्तः ।

4. मुच् से खिद तक "शेमुचादीनाम्" से नुम् ।

सिक्षीष्ट[1] । असिचत्[2]-असिक्त । असेक्ष्यत्-त ।

१० लिप—उपदेहे । उभयपदी, अनिट् ।

दशलकारेषु—लिम्पति, ते । लिलेप-लिलिपे । लेप्तासि-से । लेप्स्यति-ते । लिम्पतु-लिम्पताम् । अलिम्पत्-त । लिम्पेत्-त । लिप्यात्-लिप्सीष्ट । अलिपत्-अलिप्त[3] । अलेप्स्यत्-त ।

अथ परस्मैपदिनः ।

११. कृती[4]—छेदने । परस्मैपदी, सेट् ।

दशलकारेषु—कृन्तति । चकर्त । कर्तिता । कर्तिष्यति[5]-कर्त्स्यति । कृन्ततु । अकृन्तत । कृन्तेत । कृत्यात् । अकर्तीत । अकर्तिष्यत्-अकर्त्स्यत् ।

१२. खिद—परिदेवने । परस्मैपदी, अनिट् ।

दशलकारेषु—खिन्दति । चिखेद । खेत्ता । खेत्स्यति । खिन्दतु । अखिन्दत् । खिन्देत् । खिद्यात् । अखैत्सीत्[6] । अखेत्स्यत् ।

---

1. आ०लिङ्० तथा लुङ् आत्मनेपद में "लिङ्सिचा..." से किस्वात् गुणाभाव ।

2. "लिपिसिचिह्वश्च" से अङ्, एवं लिप् में भी ।

3. क्त-लिप्तः । क्त्वा-लिप्त्वा । तुमुन्-लेप्तुम् । घञ्-लेपः । णिच्-लेपयति । लिलिप्सति ।

4. ईकार इत् निष्ठा में इट् निषेध के लिये है । कृत्तः । कृत्तवान् ।

5. "सेऽसिचिकृतचृत..." से स परे होते इट् विकल्प । सन्-चिकर्तिषति, चिकृत्सति ।

6. हलन्तलक्षणावृद्धि । घञ्-खेदः । क्त-खिन्नः । तुमुन्-खेत्तुम् । सन्-चिखित्सति ।

१३ ओव्रश्चू—छेदने । परस्मैपदी, वेट् ।

दशलकारेषु—वृश्चति । वव्रश्च । व्रश्चिता-व्रष्टा[1] । व्रश्चिष्यति-व्रक्ष्यति । वृश्चतु । अवृश्चत् । वृश्चेत् । वृश्च्यात् । अव्रश्चीत्-अव्राक्षीत्[2] । अव्रश्चिष्यत् अव्रक्ष्यत् ।

१४ व्यच—व्याजीकरणे । परस्मैपदी, सेट् ।

दशलकारेषु—विचति । विव्याच, विविचतुः, विविचुः । व्यचिता । व्यचिष्यति । विचतु । अविचत् । विचेत् । विच्यात् । अव्याचीत्-अव्यचीत् । अव्यचिष्यत् ।

१५ उछि—उञ्छे । परस्मैपदी, सेट् ।

दशलकारेषु—उञ्छति[3] । उञ्छाञ्चकार[4] । उञ्छिता । उञ्छिष्यति । उञ्छतु । औञ्छत् । उञ्छेत् । उञ्छ्यात् । औञ्छीत्[5] । औञ्छिष्यत् ।

१६ ऋच्छ—गतीन्द्रियप्रलयमूर्तिभावेषु । परस्मैपदी, सेट् ।

दशलकारेषु—ऋच्छति । आनर्च्छ । ऋच्छिता । ऋच्छिष्यति । ऋच्छतु । आर्च्छत् । ऋच्छेत् । ऋच्छ्यात् । आर्च्छीत् । आर्च्छिष्यत् ।

१७ उभ्क—उत्सर्गे । परस्मैपदी, सेट् ।

दशलकारेषु—उज्झति । उज्झाञ्चकार । उज्झिता । उज्झिष्यति । उज्झतु । औज्झत् । उज्झेत् । उज्झ्यात् । औज्झीत्[6] । औज्झिष्यत् ।

---

1. "स्वरति..." से वेट् । क्त-वृक्णः, (ओदितश्च) तुमुन्-व्रश्चितुम् । सन्-विव्रश्चिषति-विव्रक्षति ।

2. अव्रश्च्+स्+ईत्, "स्कोःसंयोगाद्योरन्ते" सलोप, कुत्व, षत्व ।

3. इदित्वात् नुम्, श्चुत्व ।

4. "इजादेश्च..." आम् ।

5. "आटश्च" की वृद्धि । मा भवान् उञ्छीत् (नर्टि) ।

6. मा भवान् उज्झीत् ।

१८ लुभ—विमोहने। परस्मैपदी, सेट्।

दशलकारेषु—लुभति । लुलोभ । लोभिता, लोब्धा[1] । लोभिष्यति । लुभतु । अलुभत् । लुभेत् । लुभ्यात् । अलोभीत् । अलोभिष्यत् ।

१९ तृप—तृप्तौ । परस्मैपदी, सेट्।

दशलकारेषु—तृपति । ततर्प । तर्पिता । तर्पिष्यति । तृपतु । अतृपत् । तृपेत् । तृप्यात् । अतर्पीत् । अतर्पिष्यत् ।

२० तृम्फ—तृप्तौ । परस्मैपदी, सेट्।

दशलकारेषु—तृफति[2] । ततृम्फ । तृम्फिता । तृम्फिष्यति । तृम्फतु । अतृम्फत् । तृम्फेत् । तृफ्यात् । अतृम्फीत् । अतृम्फिष्यत् ।

२१ मृड—सुखने । परस्मैपदी, सेट्।

दशलकारेषु—मृडति । ममर्ड । मर्डिता । मर्डिष्यति । मृडतु । अमृडत् । मृडेत् । मृड्यात् । अमर्डीत् । अमर्डिष्यत् ।

२२ पृड् सुखने । मृड्वत् रूपाणि ।

२३. इष—इच्छायाम् । परस्मैपदी, सेट्।

दशलकारेषु—इच्छति । इयेष-ईषतुः । एषिता[3]—एष्टा । एषिष्यति । इच्छतु । ऐच्छत् । इच्छेत् । इष्यात् । ऐषीत्[4] । ऐषिष्यत् ।

२४. कुट—कौटिल्ये । परस्मैपदी, सेट्।

दशलकारेषु—कुटति । चुकोट, चुकुटिथ[5] । कुटिता । कुटिष्यति ।

1. "तीषसहलुभरुषरिषः" से वेट् ।

2. 'श' अपित् सार्वधातुक होने से ङित् है, अतः "अनिदिताम्..." से न लोप हो कर "शेतृम्फादीनां नुम् वाच्यः" ।

3. "तीषसहलुभरुषरिषः" वेट् ।

4. "नेटि" "आटश्च" ।

5. "गाङ् कुटादिभ्योऽञ्णिन्ङित्" से ङित्वात् गुणाभाव ।

कुटतु । अकुटत् । कुटेत् । कुट्यात् । अकुटीत् । अकुटिष्यत् ।

२५. पुट—संश्लेषणे । परस्मैपदी, सेट् ।

दशलकारेषु—पुटति । पुपोट, पुपुटिथ । पुटिता । पुटिष्यति । पुटतु । अपुटत् । पुटेत् । पुट्यात् । अपुटीत् । अपुटिष्यत् ।

२६. स्फुट—विकसने । परस्मैपदी, सेट् ।

दशलकारेषु—स्फुटति । पुस्फोट । स्फुटिता । स्फुटिष्यति । स्फुटतु । अस्फुटत् । स्फुटेत् । स्फुट्यात् । अस्फुटत्[1] । अस्फुटिष्यत् ।

२७. स्फुर—सञ्चलने । परस्मैपदी, सेट् ।

दशलकारेषु—स्फुरति । पुस्फोर । स्फुरिता । स्फुरिष्यति । स्फुरतु । अस्फुरत् । स्फुरेत् । स्फुर्यात् । अस्फुरीत् । अस्फुरिष्यत् ।

२८. स्फुल—सञ्चलने । स्फुरवत् । रूपाणि ।

२९. णू—स्तवने । परस्मैपदी. सेट् ।

दशलकारेषु—नुवति । नुनाव । नुविता । नुविष्यति । नुवतु । अनुवत् । नुवेत् । नूयात् । अनुवीत । अनुविष्यत्[2] । ( इति कुटादयः ) ।

३०. टुमस्जो—शुद्धौ । परस्मैपदी, अनिट् ।

दशलकारेषु—मज्जति[3] । ममज्ज, ममज्जतुः, ममज्जिथ—ममङ्क्थ[4] । मङ्क्ता । मङ्क्ष्यति । मज्जतु । अमज्जत् । मज्जेत् । मज्ज्यात् । अमाङ्क्षीत् ।

---

1. कुट से णू तक कुटादिगण है ।

2. क्त—नूतः सन्—नुनूषति ।

3. श्चुत्व से सकार को शकार, फिर "झलां जश् झशि से" शकार को जकार ।

4. "मस्जिनशो र्झलि" नुम् । संयोगादि लोप ।

असङ्क्ष्यत्[1]।

३१. रुजो[2]—भङ्गे। परस्मैपदी, अनिट्।

दशलकारेषु—रुजति। रुरोज। रोक्ता। रोक्ष्यति। रुजतु। अरुजत्। रुजेत्। रुज्यात्। अरौक्षीत्-अरौक्ताम्। अरोक्ष्यत्।

३२. भुजो[3]—कौटिल्ये। परस्मैपदी, अनिट्।

दशलकारेषु—भुजति। बुभोज। भोक्ता। भोक्ष्यति। भुजतु। अभुजत्। भुजेत्। भुज्यात्। अभौक्षीत्। अभोक्ष्यत्।

३३. विश—प्रवेशने। परस्मैपदी, अनिट्।

दशलकारेषु—विशति। विवेश। वेष्टा। वेक्ष्यति। विशतु। अविशत्। विशेत्। विश्यात्। अविक्षत्[4]। अवेक्ष्यत्।

३४. मृश—आमर्शने। परस्मैपदी, अनिट्।

दशलकारेषु—मृशति। ममर्श, ममृशतुः। म्रष्टा[5]। म्रक्ष्यति। मृशतु। अमृशत्। मृशेत्। मृश्यात्। अम्राक्षीत्[6]-अमार्क्षीत्-अमृक्षत्। अम्रक्ष्यत्।

३५. षद्लृ—विशरणगत्यवसादनेषु। परस्मैपदी, अनिट्।

---

1. "चोः कुः" जकार को गकार, चर्त्व, अनुस्वार परसवर्ण। अमाङ्क्ताम्, अमाङ्क्षुः। क्त—मग्नः (ओदितश्च)। ट्वितोऽथुच्"—मज्जथुः क्त्वा—मङ्क्त्वा। तुमुन्—मङ्क्तुम्। णिच्—मज्जयति। सन्—मिमङ्क्षति।

2. मग्नः।

3 ओदित् होने से निष्ठा में-भुग्नः।

4. "शल इगुपधादनिटः क्सः"। क्त-विष्टः। क्त्वा-विष्ट्वा। तुमुन्-वेष्टुम्। घञ्-वेशः। णिच्-वेशयति। सन्-विविक्षति। उपविशति-बैठता है।

5. "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" से अम् आगम।

6. "स्पृशमृशकृष-—" से सिच्-विकल्प, अमागम विकल्प से। सिच् के अभाव में क्स।।

दशलकारेषु—सीदति[1] । ससाद, सेदतुः, सेदिथ, ससत्थ । सत्ता । सत्स्यति । सीदतु । असीदत् । सीदेत् । सद्यात् । असदत्[2] । असत्स्यत् ।

३६. शद्लृ—शातने । परस्मैपदी, अनिट् ।

दशलकारेषु—शीयते[3] । शशाद, शेदतुः, शेदुः, शेदिथ-शशत्थ । शत्ता । शत्स्यति । शीयताम् । अशीयत । शीयेत । शद्यात् । अशदत् । अशत्स्यत् ।

३७. कॄ—विक्षेपे परस्मैपदी, सेट् ।

दशलकारेषु - किरति । चकार, चकरतुः[4], चकरुः । करिता[5]-करीता । करिष्यति-करीष्यति । किरतु । अकिरत् । किरेत् । कीर्यात्[6] । अकारीत् । अकरिष्यत्, अकरीष्यत् ।

३८ गॄ—निगरणे । परस्मैपदी, सेट् ।

दशलकारेषु—गिरति[7] । जगार । गरिता-गरीता । गरिष्यति-गरीष्यति । गिरतु । अगिरत् । गिरेत् । गीर्यात् । अगारीत् । अगरिष्यत-अगरीष्यत् ।

---

2. "पाघ्राध्मा—" से सीद् आदेश । लृदित् होने से अङ् । उपसीदति-पास बैठता है । निषीदति-बैठता है । प्रसीदति-प्रसन्न होता है । विषीदति-दुःखी होता है । क्त-सन्नः । क्त्वा-सत्त्वा । तुमुन्-सत्तुम् । णिच्-सादयति । सन्-सिषत्सति । घञ्-सादः । क्तिन्-आसत्तिः (समीपता) ।

3. सार्वधातुकलकारों में 'शदेः शितः" से आत्मनेपद ।

4. 'ऋच्छत्यॄताम्, से लिट् में गुण ।

5. "वॄतो वा"-। क्तः-कीर्णः । सन्-चिकीर्षति ।

6. "हलि च" से दीर्घ ।

7. प्रत्येक रूप में "अचि विभाषा" से लत्व विकल्प हो कर 'गिलति' आदि भी समझ लेना चाहिये ।

३९. प्रच्छ—ज्ञीप्सायाम । परस्मैपदी, अनिट् ।

दशलकारेषु—पृच्छति । पप्रच्छ । प्रष्टा । प्रक्ष्यति । पृच्छतु । अपृच्छत् । पृच्छेत् । पृच्छ्यात् । अप्राक्षीत्[1] । अप्रक्ष्यत् ।

॥ इति परस्मैपदिनः ॥

४०. दृङ्—आदरे । आत्मनेपदी, अनिट् ।

दशलकारेषु—आद्रियते[2] । आदद्रे, आदद्राते, आदद्रिरे, आदद्रिषे । आदर्ता । आदरिष्यते । आद्रियताम् । आद्रियत । आद्रियेत । आदृषीष्ट । आदृत[3] । आदरिष्यत ।

४१. ध्रिङ्—अवस्थाने । आत्मनेपदी, अनिट् ।

दशलकारेषु—ध्रियते । दध्रे । धर्ता । धरिष्यते । ध्रियताम् । अध्रियत । ध्रियेत । धृषीष्ट । अधृत । अधरिष्यत ।

४२. मृङ्—प्राण परित्यागे । आत्मनेपदी, अनिट् ।

दशलकारेषु—म्रियते । ममार[4] । मर्ता । मरिष्यति । म्रियताम् । अम्रियत । म्रियेत । मृषीष्ट । अमृत । अमरिष्यत् ।

४३. पृङ्—व्यायामे । आत्मनेपदी, अनिट् ।

दशलकारेषु—व्याप्रियते । व्यापप्रे । व्यापर्ता । व्यापरिष्यते । व्याप्रियताम् । व्याप्रियत । व्याप्रियेत । व्यापृषीष्ट । व्यापृत । व्यापरिष्यत ।

---

1. हलन्त लक्षणा वृद्धि । व्रश्चेति ष, "षढोः कः सि" । क्त-पृष्टः । क्त्वा-पृष्ट्वा । तुमुन्-प्रष्टुम् । भावे नङ्-प्रश्नः । णिच्-प्रच्छयति । सन्-पिप्रक्षति ।

2. "रिङ् शयग्लिङ्क्षु" से रिङ्, इयङ् ।

3. "ह्रस्वादंगात्" सिच्लोप ।

4. "म्रियतेर्लुङ्लिङोश्च" से परस्मैपद । क्त-मृतः । णिच्-मारयति । सन्-मुमूर्षति ।

४४. जुषी[1]—प्रीतिसेवनयोः। आत्मनेपदी, सेट्।

दशलकारेषु—जुषते। जुजोष। जोषिता। जोषिष्यते। जुषताम्। अजुषत। जुषेत। जोषिषीष्ट। अजोषिष्ट। अजोषिष्यत।

४५. ओविजी[2]—भय सञ्चलनयोः। आत्मनेपदी सेट्।

दशलकारेषु—उद्विजते। उद्विविजे। उद्विजिता[3] उद्विजिष्यते उद्विजताम्। उद्विजत। उद्विजेत। उद्विजिष्ट। उद्विजिषीष्ट। उद्विजिष्यत।

४६ ओ लजी—लज्जायाम्। आत्मनेपदी, सेट्।

दशलकारेषु—लजते। लेजे। लजिता। लजिष्यते। लजताम्। अलजत्। लजेत। लजिषीष्ट। अलजिष्ट। अलजिष्यत।

४७ ओ लस्जी—लज्जायाम्। आत्मनेपदी, सेट्।

दशलकारेषु—लज्जते। ललज्जे। लज्जिता। लज्जिष्यते। लज्जताम्। अलज्जत। लज्जेत। लज्जिषीष्ट। अलज्जिष्ट। अलज्जिष्यत।

। इति तुदादयः।

---

1. ईदित् होने से निष्ठा में इट् निषेध-जुष्टः।

2 ओदित् होने से निष्ठानत्व-उद्विग्नः।

3. "विज इट्" से इट्, ङिद्वत्।

# अथ रुधादि प्रकरणम्

१. रुधिर्—आवरणे। उभयपदी, अनिट्।

लट्—पर०

| | | | |
|---|---|---|---|
| प्र० पु० | रुणद्धि | रुन्धः[1] | रुन्धन्ति |
| म० ,, | रुणत्सि | रुन्धः | रुन्ध |
| उ० ,, | रुणध्मि | रुन्ध्वः | रुन्ध्मः |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | रुन्धे | रुन्धाते | रुन्धन्ते |
| म० ,, | रुन्त्से | रुन्धाथे | रुन्ध्वे |
| उ० ,, | रुन्धे | रुन्ध्वहे | रुन्ध्महे |

लिट्—पर०

| | | | |
|---|---|---|---|
| प्र० पु० | रुरोध | रुरुधतुः | रुरुधुः |
| म० ,, | रुरोधिथ-रुरोद्ध | रुरुधथुः | रुरुध |
| उ० ,, | रुरोध | रुरुधिव | रुरुधिम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | रुरुधे | रुरुधाते | रुरुधिरे |
| म० ,, | रुरुधिषे | रुरुधाथे | रुरुधिध्वे |
| उ० ,, | रुरुधे | रुरुधिवहे | रुरुधिमहे |

लुट्—रोद्धासि-रोद्धासे। लृट्—रोत्स्यति-रोत्स्यते।

लोट्—पर०

| | | | |
|---|---|---|---|
| प्र० पु० | रुणद्धु-रुन्धात् | रुन्धाम् | रुन्धन्तु |

---

1. "श्नसो रल्लोपः"। "झरो झरि सवर्णे" से विकल्प से ध लोप, "झषस्तथोर्धोऽधः"।

| | | | |
|---|---|---|---|
| म० ,, | रुन्धि[1]-रुन्धात् | रुन्धम् | रुन्ध |
| उ० ,, | रुणधानि | रुणधाव | रुणधाम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | रुन्धाम् | रुन्धाताम् | रुन्धन्ताम् |
| म० ,, | रुन्त्स्व | रुन्धाथाम् | रुन्ध्वम् |
| उ० ,, | रुणधै | रुणधावहै | रुणधामहै |

लङ्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | अरुणत् | अरुन्धाम् | अरुन्धन् |
| म० ,, | अरुणः[2]-अरुणत् | अरुन्धम् | अरुन्ध |
| उ० ,, | अरुणधम् | अरुन्ध्व | अरुन्ध्म |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | अरुन्ध | अरुन्धाताम् | अरुन्धत |
| म० ,, | अरुन्धाः | अरुन्धाथाम् | अरुन्ध्वम् |
| उ० ,, | अरुन्धि | अरुन्ध्वहि | अरुन्ध्महि |

वि. लि. पर.

| | | | |
|---|---|---|---|
| प्र० पु० | रुन्ध्यात्[3] | रुन्ध्याताम् | रुन्ध्युः |
| म० ,, | रुन्ध्याः | रुन्ध्यातम् | रुन्ध्यात |
| उ० ,, | रुन्ध्याम् | रुन्ध्याव | रुन्ध्याम |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | रुन्धीत | रुन्धीयाताम् | रुन्धीरन् |
| म० ,, | रुन्धीथाः | रुन्धीयाथाम् | रुन्धीध्वम् |

1. "हुझल्भ्यो हेर्धिः"।

2. "दश्च" से दकार को रुत्व का विकल्प ।

3. आभीयत्व से अल्लोप के असिद्ध होने से 'अनिदिताम्' से न लोप न हुआ ।

| | | | |
|---|---|---|---|
| उ० ,, | रुन्धीय | रुन्धीवहि | रुन्धीमहि |
| | | आ. लि. पर | |
| प्र० पु० | रुध्यात् | रुध्यास्ताम् | रुध्यासुः |
| म० ,, | रुध्याः | रुध्यास्तम् | रुध्यास्त |
| उ० ,, | रुध्यासम् | रुध्यास्व | रुध्यास्म |
| | | आ. प. | |
| प्र० पु० | रुत्सीष्ट[1] | रुत्सीयास्ताम् | रुत्सीरन् |
| म० ,, | रुत्सीष्ठाः | रुत्सीयास्थाम् | रुत्सीध्वम् |
| उ० ,, | रुत्सीय | रुत्सीवहि | रुत्सीमहि |
| | | लुङ्-पर. | |
| प्र० पु० | अरुधत्[2] | अरुधताम् | अरुधन् |
| म० ,, | अरुधः | अरुधतम् | अरुधत |
| उ० ,, | अरुधम् | अरुधाव | अरुधाम |
| | | पक्षे | |
| प्र० पु० | अरौत्सीत् | अरौद्धाम्[3] | अरौत्सुः |
| म० ,, | अरौत्सीः | अरौद्धम् | अरौद्ध |
| उ० ,, | अरौत्सम् | अरौत्स्व | अरौत्स्म |
| | | आ. प. | |
| प्र० पु० | अरुद्ध | अरुत्साताम् | अरुत्सत |

1. "लिङ् सिचावात्मनेपदेषु" से कित्वात् गुणाभाव, एवं लुङ् आत्मनेपद में भी।

2. "इरितो वा" से अङ् विकल्प से।

3. हलन्तलक्षणावृद्धि, "झलो झलि" से लोप। क्त—रुद्धः। क्त्वा—रुद्ध्वा। तुमुन्—रोद्धुम्। घञ्—रोधः। णिच्—रोधयति। सन्—रुरुत्सति। निरुणद्धि—रोकता है। अनुरुणद्धि—आग्रह करना है।

| | | | |
|---|---|---|---|
| म० ,, | अरुद्धाः | अरुत्साथाम् | अरुध्वम् |
| उ० ,, | अरुत्सि | अरुत्स्वहि | अरुत्स्महि |

लृङ्—अरोत्स्यत्—अरोत्स्यत इत्यादि ।

२. भिदिर्—विदारणे । उभयपदी, अनिट् ।

लट्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | भिनत्ति | भिन्तः | भिन्दन्ति |
| म० ,, | भिनत्सि | भिन्थः | भिन्थ |
| उ० ,, | भिनद्मि | भिन्द्वः | भिन्द्मः |

आ प.

| | | | |
|---|---|---|---|
| प्र० पु० | भिन्ते | भिन्दाते | भिन्दते |
| म० ,, | भिन्त्से | भिन्दाथे | भिन्ध्वे |
| उ० ,, | भिन्दे | भिन्द्वहे | भिन्द्महे |

लिट-प.

| | | | |
|---|---|---|---|
| प्र० पु० | बिभेद | बिभिदतुः | बिभिदुः |
| म० ,, | बिभेदिथ-बिभेत्थ | बिभिदथुः | बिभिद |
| उ० ,, | बिभेद | बिभिदिव | बिभिदिम |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | बिभिदे | बिभिदाते | बिभिदिरे |
| म० ,, | बिभिदिषे | बिभिदाथे | बिभिदिध्वे |
| उ० ,, | बिभिदे | बिभिदिवहे | बिभिदिमहे |

लुट्—भेत्तासि—भेत्तासे । लृट्—भेत्स्यति—भेत्स्यते ।

लोट्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | भिनत्तु-भिन्तात् | भिन्ताम् | भिन्दन्तु |
| म० ,, | भिन्धि-भिन्तात् | भिन्तम् | भिन्त |

| | | | |
|---|---|---|---|
| उ० ,, | भिनदानि | भिनदाव | भिनदाम |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | भिन्ताम् | भिन्दाताम् | भिन्दताम् |
| म० ,, | भिन्त्स्व | भिन्दाथाम् | भिन्ध्वम् |
| उ० ,, | भिनदै | भिनदावहै | भिनदामहै |

लङ्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | अभिनत् | अभिन्ताम् | अभिन्दन् |
| म० ,, | अभिनः-अभिनत् | अभिन्तम् | अभिन्त |
| उ० ,, | अभिनदम् | अभिन्द्व | अभिन्द्म |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | अभिन्त | अभिन्दाताम् | अभिन्दत |
| म० ,, | अभिन्थाः | अभिन्दाथाम् | अभिन्ध्वम् |
| उ० ,, | अभिन्दि | अभिन्द्वहि | अभिन्द्महि |

विधि० लि० पर०

| | | | |
|---|---|---|---|
| प्र० पु० | भिन्द्यात् | भिन्द्याताम् | भिन्द्युः |
| म० ,, | भिन्द्याः | भिन्द्यातम् | भिन्द्यात |
| उ० ,, | भिन्द्याम् | भिन्द्याव | भिन्द्याम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | भिन्दीत | भिन्दीयाताम् | भिन्दीरन् |
| म० ,, | भिन्दीथाः | भिन्दीयाथाम् | भिन्दीध्वम् |
| उ० ,, | भिन्दीय | भिन्दीवहि | भिन्दीमहि |

आ० लि० पर०

| | | | |
|---|---|---|---|
| प्र० पु० | भिद्यात् | भिद्यास्ताम् | भिद्यासुः |
| म० ,, | भिद्याः | भिद्यास्तम् | भिद्यास्त |

| | | | |
|---|---|---|---|
| उ० ,, | भिद्यासम् | भिद्यास्व | भिद्यास्म |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | भित्सीष्ट | भित्सीयास्ताम् | भित्सीरन् |
| म० ,, | भित्सीष्ठाः | भित्सीयास्थाम् | भित्सीध्वम् |
| उ० ,, | भित्सीय | भित्सीवहि | भित्सीमहि |

लुङ् पर०

| | | | |
|---|---|---|---|
| प्र० पु० | अभिदत् | अभिदताम् | अभिदन् |
| म० ,, | अभिदः | अभिदतम् | अभिदत |
| उ० ,, | अभिदम् | अभिदाव | अभिदाम |

पक्षे

| | | | |
|---|---|---|---|
| प्र० पु० | अभैत्सीत् | अभैत्ताम् | अभैत्सुः |
| म० ,, | अभैत्सीः | अभैत्तम् | अभैत्त |
| उ० ,, | अभैत्सम् | अभैत्स्व | अभैत्स्म |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | अभित्त | अभित्साताम् | अभित्सत |
| म० ,, | अभित्थाः | अभित्साथाम् | अभिद्ध्वम् |
| उ० ,, | अभित्सि | अभित्स्वहि | अभित्स्महि |

लृङ्—अभेत्स्यत् - अभेत्स्यत[1] इत्यादि ।

## ३. छिदिर्—द्वैधीकरणे । उभयपदी, अनिट् ।

लट्—प०

| | | | |
|---|---|---|---|
| प्र० पु० | छिनत्ति | छिन्तः | छिन्दन्ति |
| म० ,, | छिनत्सि | छिन्थः | छिन्थ |
| उ० ,, | छिनद्मि | छिन्द्वः | छिन्द्मः |

1. क्त-छिन्नः । क्त्वा-छित्वा । तुमुन्-छेत्तुम् । तव्य-छेत्तव्यम् । घञ्-छेदः । ण्वुल्-छेदकः । कर्मवा०-छिद्यते । णिच्-छेदयति । सन्-चिच्छित्सति । यङ्-चेच्छिद्यते ।

| | | | |
|---|---|---|---|
| म० ,, | ततर्हिथ | ततृहथुः | ततृह |
| उ० ,, | ततर्ह | ततृहिव | ततृहिम |
| | | लुट् | |
| प्र० पु० | तर्हिता | तर्हितारौ | तर्हितारः |
| म० ,, | तर्हितासि | तर्हितास्थः | तर्हितास्थ |
| उ० ,, | तर्हितास्मि | तर्हितास्वः | तर्हितास्मः |
| | | लृट् | |
| प्र० पु० | तर्हिष्यति | तर्हिष्यतः | तर्हिष्यन्ति |
| म० ,, | तर्हिष्यसि | तर्हिष्यथः | तर्हिष्यथ |
| उ० ,, | तर्हिष्यामि | तर्हिष्यावः | तर्हिष्यामः |
| | | लोट् | |
| प्र० पु० | तृणेढु-तृण्ढात् | तृण्ढाम् | तृंहन्तु |
| म० ,, | तृण्ढि[1]-तृण्ढात् | तृण्ढम् | तृण्ढ |
| उ० ,, | तृणहानि | तृणहाव | तृणहाम |
| | | लङ् | |
| प्र० पु० | अतृणेट् | अतृण्ढाम् | अतृंहन् |
| म० ,, | अतृणेट् | अतृण्ढम् | अतृण्ढ |
| उ० ,, | अतृणहम् | अतृंह्व | अतृंह्म |
| | | विधिलिङ् | |
| प्र० पु० | तृंह्यात् | तृंह्याताम् | तृंह्युः |
| म० ,, | तृंह्याः | तृंह्यातम् | तृंह्यात |
| उ० ,, | तृंह्याम् | तृंह्याव | तृंह्याम |
| | | आशीर्लिङ् | |
| प्र० पु० | तृह्यात् | तृह्यास्ताम् | तृह्यासुः |

1. "हुझल्भ्यो हेर्धिः"।

| | | | |
|---|---|---|---|
| म० ,, | तृह्याः | तृह्यास्तम् | तृह्यास्त |
| उ० ,, | तृह्यासम् | तृह्यास्व | तृह्यास्म |

लुङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अतृहत् | अतर्हिष्टाम् | अतर्हिषुः |
| म० ,, | अतर्हीः | अतर्हिष्टम् | अतर्हिष्ट |
| उ० ,, | अतर्हिषम् | अतर्हिष्व | अतर्हिष्म |

लृङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अतर्हिष्यत् | अतर्हिष्यताम् | अतर्हिष्यन् |
| म० ,, | अतर्हिष्यः | अतर्हिष्यतम् | अतर्हिष्यत |
| उ० ,, | अतर्हिष्यम् | अतर्हिष्याव | अतर्हिष्याम |

१२ हिसि—हिंसायाम् । परस्मैपदी, सेट् ।

दशलकारेषु—हिनस्ति[1] । जिहिंस । हिंसिता । हिंसिष्यति । हिनस्तु । लङ्—अहिनत्, अहिंस्ताम्, अहिंसन्, अहिनः-अहिनत् । हिंस्यात्, हिंस्याताम् । हिंस्यात् । हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत् ।

१३ उन्दी—क्लेदने । परस्मैपदी, सेट् ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | उनत्ति | उन्तः | उन्दन्ति |
| म० ,, | उनत्सि | उन्थः | उन्थ |
| उ० ,, | उनद्मि | उन्द्वः | उन्द्मः |

लिट्—उन्दाञ्चकार[2] । लुट्-उन्दिता । लृट्-उन्दिष्यति

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | उनत्तु-उन्तात् | उन्ताम् | उन्दन्तु |
| म० ,, | उन्धि-उन्तात् | उन्तम् | उन्त |

1. "श्नान्नलोपः" ।

2. इजादि गुरुमान है ।

| | | | |
|---|---|---|---|
| उ० ,, | उनदानि | उनदाव | उनदाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | औनत् | औन्ताम् | औन्दन् |
| म० ,, | औनः-औनत् | औन्तम् | औन्त |
| उ० ,, | औनदम् | औन्द्व | औन्द्म |

वि. लि.—उन्द्यात् । आ. लि.—उद्यात् । लुङ्—औन्दीत्[1] । लृङ्—औन्दिष्यत् ।

१४. अञ्जू—व्यक्ति म्रक्षण कान्ति गतिषु । परस्मैपदी, वेट् ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | अनक्ति | अङ्क्तः | अञ्जन्ति |
| म० ,, | अनक्षि | अङ्क्थः | अङ्क्थ |
| उ० ,, | अनज्मि | अञ्ज्वः | अञ्ज्मः |

लिट्

| | | | |
|---|---|---|---|
| प्र० पु० | आनञ्ज | आनञ्जतुः | आनञ्जुः |
| म० ,, | आनञ्जिथ[1]-आनङ्क्थ | आनञ्जथुः | आनञ्ज |
| उ० ,, | आनञ्ज | आनञ्जिव | आनञ्जिम |

लुट्—अञ्जिता—अङ्क्ता । लृट्—अञ्जिष्यति—अङ्क्ष्यति ।

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | अनक्तु-अङ्क्तात् | अङ्क्ताम् | अञ्जन्तु |
| म० ,, | अङ्ग्धि—अङ्क्तात् | अङ्क्तम् | अङ्क्त |
| उ० ,, | अनजानि | अनजाव | अनजाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | आनक् | आङ्क्ताम् | आञ्जन् |

---

1. "नेटि" "आटश्च" । मा भवान्-उन्दीत् । क्त—उत्तः—उन्नः । क्त्वा—उन्दित्वा ।

| | | | |
|---|---|---|---|
| म० ,, | ,, | आङ्क्थ | आङ्क्त |
| उ० ,, | आनजम् | आञ्ज्व | आञ्ज्म |

वि. लि.—अञ्ज्यात् । आ. लि.—अज्यात् । लुङ्- आञ्जीत्[1] । लृङ्—आञ्जिष्यत् ।

१५. तञ्चू—सङ्कोचने । परस्मैपदी, वेट् ।

दशलकारेषु—तनक्ति । ततञ्च । तञ्चिता—तङ्क्ता । तञ्चिष्यति—तङ्क्ष्यति । तनक्तु । अतनक् । तञ्च्यात् । तच्यात् । अतञ्चीत्, अताङ्क्षीत्, अतङ्क्ताम् । अतञ्चिष्यत्—अतङ्क्ष्यत् ।

१६. ओविजी—भयसञ्चलनयोः । परस्मैपदी, वेट् ।

दशलकारेषु—विनक्ति । विवेज, विविजिथ । विजिता । विजिष्यति । विनक्तु । अविनक् । विञ्ज्यात् । विज्यात् ।अविजीत् । अविजिष्यत् ।

१७. शिष्लृ—विशेषणे । परस्मैपदी, अनिट् ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | शिनष्टि | शिंष्टः[2] | शिंषन्ति |
| म० ,, | शिनक्षि | शिंष्ठः | शिंष्ठ |
| उ० ,, | शिनष्मि | शिंष्वः | शिंष्मः |

लिट्

| | | | |
|---|---|---|---|
| प्र० पु० | शिशेष | शिशिषतुः | शिशिषुः |
| म० ,, | शिशेषिथ-शिशेष्ठ | शिशिषथुः | शिशिष |
| उ० ,, | शिशेष | शिशिषिव | शिशिषिम |

लुट्—शेष्टा । लृट्—शेक्ष्यति ।

---

1. "अञ्जेः सिचि" से नित्य इट् । मा भवान् अञ्जीत् । क्त—अक्तः । क्त्वा—अञ्जित्वा—अङ्क्त्वा । व्यनक्ति—प्रकट करता हैं । ल्युट्—अञ्जनम् । णिच्—अञ्जयति । सन्—अञ्जिजिषति ।

2. शिन न् ष तः, 'श्नान्नलोपः' 'श्नसोरल्लोपः' अनुस्वार, ष्टुत्व ।

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | शिनष्टु-शिंष्टात् | शिंष्टाम् | शिंषन्तु |
| म० ,, | शिण्ढि[1]-शिंष्टात् | शिंष्टम् | शिंष्ट |
| उ० ,, | शिनषाणि | शिनषाव | शिनषाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अशिनट् | अशिंष्टाम् | अशिंषन् |
| म० ,, | अशिनट् | अशिंष्टम् | अशिंष्ट |
| उ० ,, | अशिनषम् | अशिंष्व | अशिंष्म |

वि. लि.—शिंष्यात्। आ. लि.—शिष्यात्। लुङ्—अशिषत्[2]। लृङ्—अशेक्ष्यत्।

१८. पिष्लृ—सञ्चूर्णने। परस्मैपदी, अनिट्।

दशलकारेषु—पिनष्टि। पिपेष। पेष्टा। पेक्ष्यति। पिनष्टु[3]। अपिनट्। पिंष्यात्। पिष्यात्। अपिषत्। अपेक्ष्यत्।

१९. भञ्जो—आमर्दने। परस्मैपदी, अनिट्।

दशलकारेषु—भनक्ति। बभञ्ज, बभञ्जिथ, बभङ्क्थ। भङ्क्ता। भङ्क्ष्यति। भनक्तु। अभनक्, अभङ्क्ताम्। भञ्ज्यात्। भज्यात्। अभाङ्क्षीत्[1], अभाङ्क्ताम्। अभङ्क्ष्यत्।

२०. भुज—पालनाभ्यवहारयोः। परस्मैपदी, अनिट्।

दशलकारेषु—भुनक्ति। बुभोज। भोक्ता। भोक्ष्यति। भुनक्तु।

---

1. हेर्धि, ष्टुत्व, "झरो झरि सवर्णे" परसवर्ण। क्त—शिष्टः। क्त्वा—शिष्ट्वा। तुमुन्—शेष्टुम्। घञ्—शेषः। णिच्—शेषयति। सन्—शिशिक्षति।

2. लृदित्वादङ्।

3. पिंष्टाम् पिंषन्तु, पिण्ढि।

4. हलन्त लक्षण वृद्धि। क्त-भग्नः।

अभुनक् । भुञ्ज्यात् । भुज्यात् । अभौक्षीत्[1] । अभोक्ष्यत् ।

आत्मनेपदिनः

२१. ञि इन्धी—दीप्तौ । आ० प० सेट ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | इन्धे | इन्धाते | इन्धते |
| म० ,, | इन्त्से | इन्धाथे | इन्ध्वे |
| उ० ,, | इन्धे | इन्ध्वहे | इन्ध्महे |

लिट्—इन्धाञ्चक्रे । लुट्—इन्धिता । लृट्—इन्धिष्यते ।

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | इन्धाम् | इन्धाताम् | इन्धताम |
| म० ,, | इन्त्स्व | इन्धाथाम् | इन्ध्वम् |
| उ० ,, | इनधै | इनधावहै | इनधामहै |

लङ

| | | | |
|---|---|---|---|
| प्र० पु० | ऐन्ध | ऐन्धाताम् | ऐन्धत |
| म० ,, | ऐन्धाः | ऐन्धाथाम् | ऐन्ध्वम् |
| उ० ,, | ऐन्धि | ऐन्ध्वहि | ऐन्ध्महि |

वि० लि०—इन्धीत । आ०लि०—इन्धिषीष्ट । लुङ्—ऐन्धिष्ट लृङ्—ऐन्धिष्यत ।

२२. विद्—विचारणे । आ० प०, अनिट् ।

दशलकारेषु—विन्ते । विविदे । वेत्ता । वेत्स्यते । विन्ताम् । अविन्त । विन्दीत । वित्सीष्ट । अवित्त । अवेत्स्यत ।

२३. खिद्—दैन्ये । आ० प०, अनिट् ।

दशलकारेषु—खिन्ते । चिखिदे । खेत्ता । खेत्स्यते । खिन्ताम् । अखिन्त । खिन्दीत । खित्सीष्ट । अखित्त । अखेत्स्यत ।

। इति रुधादयः ।

---

1. "भुजोऽनवने" से आत्मनेपद में भी रूप होंगे । भुङ्क्ते । बुभुजे । भोक्तासे । भोक्ष्यते । भुङ्क्ताम् । अभुङ्क्त । भुञ्जीत । भुक्षीष्ट । अभुक्त । अभोक्ष्यत । क्त-भुक्तः । क्त्वा-भुक्त्वा । घञ्-भोगः । क्तिन्-भुक्तिः । कर्मवा-भुज्यते । णिच्-भोजयति । सन्-बुभुक्षति । बुभुक्षा ।

# अथ तनादि-प्रकरणम्

१. तनु—विस्तारे । परस्मैपदी, सेट् ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | तनोति | तनुतः | तन्वन्ति |
| म० ,, | तनोषि | तनुथः | तनुथ |
| उ० ,, | तनोमि | तन्वः-तनुवः | तन्मः-तनुमः |

लिट्

| | | | |
|---|---|---|---|
| प्र० पु० | ततान | तेनतुः | तेनुः |
| म० ,, | तेनिथ | तेनथुः | तेन |
| उ० ,, | ततान-ततन | तेनिव | तेनिम |

लुट्—तनिता । लृट्—तनिष्यति इत्यादि ।

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | तनोतु | तनुताम् | तन्वन्तु |
| म० ,, | तनु[1]-तनुतात् | तनुतम् | तनुत |
| उ० ,, | तनवानि | तनवाव | तनवाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अतनोत् | अतनुताम् | अतन्वन् |
| म० ,, | अतनोः | अतनुतम् | अतनुत |
| उ० ,, | अतनवम् | अतनुव-न्व | अतनुम-न्म |

विधिलिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | तनुयात् | तनुयाताम् | तनुयुः |
| म० ,, | तनुयाः | तनुयातम् | तनुयात |

| | | | |
|---|---|---|---|
| उ० ,, | तनुयाम् | तनुयाव | तनुयाम |

आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | तन्यात् | तन्यास्ताम् | तन्यासुः |
| म० ,, | तन्याः | तन्यास्तम् | तन्यास्त |
| उ० ,, | तन्यासम् | तन्यास्व | तन्यास्म |

लुङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अतानीत् | अतानिष्टाम् | अतानिषुः |
| म० ,, | अतानीः | अतानिष्टम् | अतानिष्ट |
| उ० ,, | अतानिषम् | अतानिष्व | अतानिष्म |

पक्षे—अतनीत्, अतनिष्टाम् इत्यादि। लृङ्—अतनिष्यत्।

आत्मनेपद में

दशलकारेषु—तनुते। तेने। तनितासे। तनिष्यते। तनुताम्। अतनुत। तन्वीत। तनिषीष्ट। अतनिष्ट, अतत[2]। अतनिष्यत।

२. षणु[3]—दाने। उभयपदी, सेट्।

लट्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | सनोति | सनुतः | सन्वन्ति |
| म० ,, | सनोषि | सनुथः | सनुथ |
| उ० ,, | सनोमि | सनुवः-सन्वः | सनुमः-सन्मः |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | सनुते | सन्वाते | सन्वते |
| म० ,, | सनुषे | सन्वाथे | सनुध्वे |

1. "उतश्च प्रत्ययात्—" से हि का लुक्।

2. तनादिभ्यस्तथासोः" से सिच् लुक्, "अनुदात्तोपदेश—" से अनुनासिकलोप। म० पु०—अतथाः—अतनिष्ठाः।

3. "धात्वादेः ष सः"। षत्व निवृत्ति से णत्व निवृत्ति।

| | | | |
|---|---|---|---|
| उ० ,, | सन्वे | सनुवहे-न्वहे | सनुमहे-न्महे |

लिट्-ससान-सेने । लुट्-सनितासि-से । लृट्-सनिष्यति-ते ।

लोट्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | सनोतु-सनुतात् | सनुताम् | सन्वन्तु |
| म० ,, | सनु-सनुतात् | सनुतम् | सनुत |
| उ० ,, | सनवानि | सनवाव | सनवाम |

आ०प०

| | | | |
|---|---|---|---|
| प्र० पु० | सनुताम् | सन्वाताम् | सन्वताम् |
| म० ,, | सनुष्व | सन्वाथाम् | सनुध्वम् |
| उ० ,, | सनवै | सनवावहै | सनवामहै |

लङ्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | असनोत् | असनुताम् | असन्वन् |
| म० ,, | असनोः | असनुतम् | असनुत |
| उ० ,, | असनवम् | असनुव-न्व | असनुम-न्म |

आ०प०

| | | | |
|---|---|---|---|
| प्र० पु० | असनुत | असन्वाताम् | असन्वत |
| म० ,, | असनुथाः | असन्वाथाम् | असनुध्वम् |
| उ० ,, | असन्वि | असनुवहि-न्वहि | असनुमहि-न्महि |

विधि० पर०

| | | | |
|---|---|---|---|
| प्र० पु० | सनुयात् | सनुयाताम् | सनुयुः |
| म० ,, | सनुयाः | सनुयातम | सनुयात |
| उ० ,, | सनुयाम् | सनुयाव | सनुयाम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | सन्वीत | सन्वीयाताम् | सन्वीरन् |
| म० ,, | सन्वीथाः | सन्वीयाथाम् | सन्वीध्वम् |
| उ० ,, | सन्वीय | सन्वीवहि | सन्वीमहि |

आशी० पर०

| | | | |
|---|---|---|---|
| प्र० पु० | सायात्[1] | सायास्ताम् | सायासुः |
| म० ,, | सायाः | सायास्तम् | सायास्त |
| उ० ,, | सायासम् | सायास्व | सायास्म |

पक्षे—सन्यात् । लुङ्-असानीत्-असनीत् ।

आत्मने०

| | | | |
|---|---|---|---|
| प्र० पु० | असात[2]-असनिष्ट | असनिषाताम् | असनिषत |
| म० ,, | असाथाः-असनिष्ठाः | असनिषाथाम् | असनिध्वम् |
| उ० ,, | असनिषि | असनिष्वहि | असनिष्महि |

लृङ्-असनिष्यत्-असनिष्यत ।

३ क्षणु—हिंसायाम् । उभयपदी, सेट् ।

दशलकारेषु—क्षणोति-क्षणुते[3] । चक्षाण-चक्षणे । क्षणितासि-से । क्षणिष्यति-ते । क्षणोतु-क्षणुताम् । अक्षणोत्-अक्षणुत । क्षणुयात्-क्षण्वीत । क्षण्यात्-क्षणिषीष्ट । अक्षणीत्[4]-अक्षत, अक्षणिष्ट । अक्षणिष्यत्-अक्षणिष्यत ।

४ क्षिणु—हिंसायाम् । उभयपदी, सेट् ।

दशलकारेषु—क्षिणोति-क्षेणोति-क्षेणुते-क्षिणुते । चिक्षेण-चिक्षिणे । क्षेणितासि-से । क्षेणिष्यति-ते । क्षिणोतु-क्षेणोतु-क्षिणुताम्, क्षेणुताम् । अक्षिणोत्-अक्षेणोत्-अक्षिणुत-अक्षेणुत । क्षिणुयात्-क्षेणुयात्-क्षिण्वीत, क्षेण्वीत । क्षिण्यात्-क्षेणिषीष्ट । अक्षेणीत्-अक्षित, अक्षेणिष्ट । अक्षेणिष्यत्-त ।

1. "जनसनखनां सञ्झलोः" से अनुनासिक को आकारान्तादेश ।

2. सर्वत्र—"तनादिभ्यस्तथासोः" से सिच् लोप, "अनुदात्तोपदेश..." से अनुनासिकलोप ।

3. "उप्रत्यये लघूपधस्य गुणो वा" ।

4. ह्म्यन्तक्षणश्वस..." से वृद्धि निषेध ।

५ तृणु—अदने । उभयपदी, सेट् ।

दशलकारेषु—तृणोति-तर्णोति-तृणुते, तर्णुते । ततर्ण-ततृणे । तर्णितासि-से । तर्णिष्यति-ते । तृणोतु-तर्णोतु-तृणुताम्, तर्णुताम् । अतृणोत्, अतर्णोत्-अतृणुत, अतर्णुत । तृणुयात्-तर्णुयात्-तृण्वीत, तर्ण्वीत । तृण्यात्, तर्णिषीष्ट । अतर्णीत्, अतृत, अतर्णिष्ट । अतर्णिष्यत्-त ।

६ घृणु—दीप्तौ । उभयपदी, सेट् ।

दशलकारेषु—घृणोति, घर्णोति । घृणुते-घर्णुते । इत्यादि तृणुवत् ।

७. डुकृञ्[1]—करणे । उभयपदी, अनिट् ।

लट्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | करोति | कुरुतः[2] | कुर्वन्ति[3] |
| म० ,, | करोषि | कुरुथः | कुरुथ |
| उ० ,, | करोमि | कुर्वः[4] | कुर्मः |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | कुरुते | कुर्वाते | कुर्वते |
| म० ,, | कुरुषे | कुर्वाथे | कुरुध्वे |
| उ० ,, | कुर्वे | कुर्वहे | कुर्महे |

लिट्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | चकार | चक्रतुः | चक्रुः |
| म० ,, | चकर्थ | चक्रथुः | चक्र |
| उ० ,, | चकार-चकर | चकृव | चकृम |

लुट—कर्तासि—से । लृट्—करिष्यति—ते ।

---

1. "ड्वितः क्त्रिः" कृत्रिमम् ।
2. "अत उत्सार्वधातुके" ।
3. "न भकुर्छुराम्" से निषेध ।
4. "नित्यं करोतेः" से म् व् का लोप ।

लोट् पर.

| | | | |
|---|---|---|---|
| प्र० पु० | करोतु-कुरुतात् | कुरुताम् | कुर्वन्तु |
| म० ,, | कुरु-कुरुतात् | कुरुतम् | कुरुत |
| उ० ,, | करवाणि | करवाव | करवाम |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | कुरुताम् | कुर्वाताम् | कुर्वताम् |
| म० ,, | कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| उ० ,, | करवै | करवावहै | करवामहै |

लङ्-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | अकरोत् | अकुरुताम् | अकुर्वन् |
| म० ,, | अकरोः | अकुरुतम् | अकुरुत |
| उ० ,, | अकरवम् | अकुर्व | अकुर्म |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | अकुरुत | अकुर्वाताम् | अकुर्वत |
| म० ,, | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् |
| उ० ,, | अकुर्वि | अकुर्वहि | अकुर्महि |

वि. लि.-पर.

| | | | |
|---|---|---|---|
| प्र० पु० | कुर्यात्[1] | कुर्याताम् | कुर्युः |
| म० ,, | कुर्याः | कुर्यातम् | कुर्यात |
| उ० ,, | कुर्याम् | कुर्याव | कुर्याम |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |
| म० ,, | कुर्वीथाः | कुर्वीयाथाम् | कुर्वीध्वम् |

1. "ये च" से उकार लोप।

| | | | |
|---|---|---|---|
| उ० ,, | कुर्वीय | कुर्वीवहि | कुर्वीमहि |

आ. लि.-प.

| | | | |
|---|---|---|---|
| प्र० पु० | क्रियात् | क्रियास्ताम् | क्रियासुः |
| म० ,, | क्रियाः | क्रियास्तम् | क्रियास्त |
| उ० ,, | क्रियासम् | क्रियास्व | क्रियास्म |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | कृषीष्ट | कृषीयास्ताम् | कृषीरन् |
| म० ,, | कृषीष्ठाः | कृषीयास्थाम् | कृषीध्वम् |
| उ० ,, | कृषीय | कृषीवहि | कृषीमहि |

लुङ्-प.

| | | | |
|---|---|---|---|
| प्र० पु० | अकार्षीत् | अकार्ष्टाम् | अकार्षुः |
| म० ,, | अकार्षीः | अकार्ष्टम् | अकार्ष्ट |
| उ० ,, | अकार्षम् | अकार्ष्व | अकार्ष्म |

आ. प.

| | | | |
|---|---|---|---|
| प्र० पु० | अकृत[1] | अकृषाताम् | अकृषत |
| म० ,, | अकृथाः | अकृषाथाम् | अकृढ्वम् |
| उ० ,, | अकृषि | अकृष्वहि | अकृष्महि |

लृङ्—अकरिष्यत्—अकरिष्यत इत्यादि ।

---

1. "ह्रस्वादङ्गात्" । अपकरोति—बुरा करता है । विकरोति—बिगाड़ता है । अधिकरोति — अधिकार करता है । प्रतिकरोति—प्रतिकार करता है । उपकरोति—उपकार करता है । क्त—कृतः । क्त्वा—कृत्वा । तुमुन्—कर्तुम् । तव्य—कर्तव्यम् । घञ्—कारः । क्तिन्—कृतिः । ण्वुल्—कारकः । तृच्—कर्ता । णिच्—कारयति । सन्—चिकीर्षति । चिकीर्षुः । कर्मवा०—क्रियते ।

८. वनु—याचने । आत्मनेपदी, सेट् ।

दशलकारेषु—वनुते । ववने । वनिता । वनिष्यते । वनुताम् । अवनुत । वन्वीत । वनिषीष्ट । अवत, अवनिष्ट । अवनिष्यत ।

९. मनु—याचने । आत्मनेपदी, सेट् ।

दशलकारेषु—मनुते । मेने । मनितासे । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमत, अमनिष्ट । अमनिष्यत ।

इति तनादयः ।

# अथ क्र्यादि प्रकरणम्

डुक्रीञ्—द्रव्यविनिमये । उभयपदी, अनिट् ।

लट्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणाति | क्रीणीतः[1] | क्रीणन्ति[2] |
| म० ,, | क्रीणासि | क्रीणीथः | क्रीणीथ |
| उ० ,, | क्रीणामि | क्रीणीवः | क्रीणीमः |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणीते | क्रीणाते | क्रीणते |
| म० ,, | क्रीणीषे | क्रीणाथे | क्रीणीध्वे |
| उ० ,, | क्रीणे | क्रीणीवहे | क्रीणीमहे |

लिट्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | चिक्राय | चिक्रियतुः | चिक्रियुः |
| म० ,, | चिक्रयिथ-चिक्रेथ | चिक्रियथुः | चिक्रिय |
| उ० ,, | चिक्राय-चिक्रिय | चिक्रियिव | चिक्रियिम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | चिक्रिये | चिक्रियाते | चिक्रियिरे |
| म० ,, | चिक्रियिषे | चिक्रियाथे | चिक्रियिध्वे |
| उ० ,, | चिक्रिये | चिक्रियिवहे | चिक्रियिमहे |

लुट्—क्रेतासि-क्रेतासे । लृट्-क्रेष्यति-क्रेष्यते ।

लोट्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणातु-क्रीणीतात् | क्रीणीताम् | क्रीणन्तु |

---

1. "ई हल्यघोः" से ईत्व ।

2. श्नाभ्यस्तयोरातः" आकार लोप ।

| | | | |
|---|---|---|---|
| म० ,, | क्रीणीहि[1]-क्रीणीतात् | क्रीणीतम् | क्रीणीत |
| उ० ,, | क्रीणानि | क्रीणाव | क्रीणाम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणीताम् | क्रीणाताम् | क्रीणताम् |
| म० ,, | क्रीणीष्व | क्रीणाथाम् | क्रीणीध्वम् |
| उ० ,, | क्रीणै | क्रीणावहै | क्रीणामहै |

लङ्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | अक्रीणात् | अक्रीणीताम् | अक्रीणन् |
| म० ,, | अक्रीणाः | अक्रीणीतम् | अक्रीणीत |
| उ० ,, | अक्रीणाम् | अक्रीणीव | अक्रीणीम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | अक्रीणीत | अक्रीणाताम् | अक्रीणत |
| म० ,, | अक्रीणीथाः | अक्रीणाथाम् | अक्रीणीध्वम् |
| उ० ,, | अक्रीणि | अक्रीणीवहि | अक्रीणीमहि |

वि०लि०-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः |
| म० ,, | क्रीणीयाः | क्रीणीयाताम् | क्रीणीयात |
| उ० ,, | क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीणीत | क्रीणीयाताम् | क्रीणीरन् |
| म० पु० | क्रीणीथाः | क्रीणीयाथाम् | क्रीणीध्वम् |
| उ० ,, | क्रीणीय | क्रीणीवहि | क्रीणीमहि |

आ०लि०-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रीयात् | क्रीयास्ताम् | क्रीयासुः |

1. हि अपित् होने से ङित् है, अतः आकार को ईकार ।

| | | | |
|---|---|---|---|
| म० ,, | क्रीयाः | क्रीयास्तम् | क्रीयास्त |
| उ० ,, | क्रीयासम् | क्रीयास्व | क्रीयास्म |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | क्रेषीष्ट | क्रेषीयास्ताम् | क्रेषीरन् |
| म० ,, | क्रेषीष्ठाः | क्रेषीयास्थाम् | क्रेषीध्वम् |
| उ० ,, | क्रेषीय | क्रेषीवहि | क्रेषीमहि |

लुङ्-पर०

| | | | |
|---|---|---|---|
| प्र० पु० | अक्रैषीत् | अक्रैष्टाम् | अक्रैषुः |
| म० ,, | अक्रैषीः | अक्रैष्टम् | अक्रैष्ट |
| उ० ,, | अक्रैषम् | अक्रैष्व | अक्रैष्म |

आ० प०

| | | | |
|---|---|---|---|
| प्र० पु० | अक्रेष्ट | अक्रेषाताम् | अक्रेषत |
| म० ,, | अक्रेष्ठाः | अक्रेषाथाम् | अक्रेध्वम् |
| उ० ,, | अक्रेषि | अक्रेष्वहि | अक्रेष्महि |

लृङ्—अक्रेष्यत्[1]-अक्रेष्यत इत्यादि ।

२. प्रीञ्—तर्पणे । उभयपदी, अनिट् ।

दशलकारेषु—प्रीणाति-प्रीणीते । पिप्राय-पिप्रिये । प्रेतासि-से । प्रेष्यति-ते । प्रीणातु-प्रीणीताम् । अप्रीणात्-अप्रीणीत । प्रीणीयात्-प्रीणीत । प्रीयात्-प्रेषीष्ट । अप्रैषीत्-अप्रेष्ट । अप्रेष्यत्-त ।

३. श्रीञ्—पाके । उभयपदी, अनिट् ।

दशलकारेषु—श्रीणाति-श्रीणीते । शिश्राय-शिश्रिये । श्रेतासि-से ।

1. "परिव्यवेभ्यः क्रियः"—आत्मनेपद । परिक्रीणीते । विक्रीणीते । बेचता है । क्त-क्रीतः । क्त्वा-क्रीत्वा । तुमुन्-क्रेतुम् । तव्य-क्रेतव्यम् । अच्-क्रयः । क्तवत्-क्रीतवान् । णिच्-क्रापयति । सन्-चिक्रीषति-ते । एवं प्री धातु के रूप भी जानो । णिच्-प्राययति ।

श्रेष्यति-ते । श्रीणातु-श्रीणीताम् । अश्रीणात्-अश्रीणीत । श्रीणीयात्-श्रीणीत श्रीयात्-श्रेषीष्ट । अश्रैषीत्-अश्रेष्ट । अश्रेष्यत्-त ।

४. मीञ्—हिंसायाम् । उभयपदी, अनिट् ।

लट्—मीनाति[1]-मीनीते । लिट्-पर०—ममौ, मिम्यतुः, मिम्युः । ममिथ, ममाथ । आ०-प०—मिम्ये, मिम्याते, मिम्यिरे । लुट्—मातासि-से । लृट्—मास्यति-ते । लोट्—मीनातु-मीनीताम् । लङ्—अमीनात्-अमीनीत । वि० लि०—मीनीयात्-मीनीत । आ० लि०—मीयात्-मासीष्ट । लुङ्—अमासीत्[2]-अमास्त, अमासाताम् । लृङ्—अमास्यत्-त ।

५. षिञ्—बन्धने । उभयपदी, अनिट् ।

दशलकारेषु—सिनाति-सिनीते । सिषाय-सिष्ये । सेतासि-से । सेष्यति-ते । सिनातु-सिनीताम् । असिनात्-असिनीत । सिनीयात्-सिनीत । सीयात्-सेषीष्ट । असैषीत्-असेष्ट । असेष्यत्-त ।

६. स्कुञ्—आप्रवणे । उभयपदी, अनिट् ।

दशलकारेषु—स्कुनोति[3]-स्कुनुते, स्कुनाति-स्कुनीते । चुस्काव-चुस्कुवे । स्कोतासि-स्कोतासे । स्कोष्यति-ते । स्कुनोतु, स्कुनुताम्-स्कुनातु-स्कुनीताम् । अस्कुनोत्-अस्कुनुत, अस्कुनात्-अस्कुनीत । स्कुनुयात्-स्कुन्वीत, स्कुनीयात्-स्कुनीत । स्कूयात्-स्कोषीष्ट । अस्कौषीत्-अस्कोष्ट । अस्कोष्यत्-त ।

७. स्तम्भु—रोधने । परस्मैपदी, सेट् ।

लट्—स्तभ्नोति, स्तभ्नाति । लिट्—तस्तम्भ । लुट्—स्तम्भिता । लृट्—स्तम्भिष्यति । लोट्—स्तभ्नोतु-स्तभ्नुतात्, स्तभ्नुताम्, स्तभ्नुवन्तु, स्तभ्नुहि । स्तभ्नातु, स्तभ्नीतात्, स्तभ्नीताम्, स्तभ्नन्तु, स्तभान-स्तभ्नीतम्,

1. "हिनुमीना" णत्व-प्रमीणाति ।
2. सक्, इट् ।
3. स्तम्भु-स्तुम्भु—" से वैकल्पिक श्नुविकरण ।

स्तभ्नीत । लङ्—अस्तभ्नोत्-अस्तभ्नात् । वि० लि०—स्तभ्नुयात्-स्तभ्नीयात् । आ० लि०—स्तभ्यात् । लुङ्—अस्तम्भीत्-अस्तभत्[1] । लृङ्—अस्तम्भिष्यत् ।

८. युञ्—बन्धने । उभयपदी, अनिट् ।

दशलकारेषु—युनाति-युनीते । युयाव-युयुवे । योतासि-से । योष्यति-ते । युनातु-युनीताम् । अयुनात्-अयुनीत । युनीयात्-युनीत । यूयात्-योषीष्ट । अयौषीत्-अयोष्ट । अयोष्यत्-त ।

९. क्नूञ्—शब्दे । उभयपदी, सेट् ।

दशलकारेषु—क्नूनाति-क्नूनीते । चुक्नाव-चुक्नुवे । क्नवितासि-क्नवितासे । क्नविष्यति-क्नविष्यते । क्नूनातु-क्नूनीताम् । अक्नूनात्-अक्नूनीत । क्नूनीयात्-क्नूनीत । क्नूयात्-क्नविषीष्ट । अक्नावीत्-अक्नविष्ट । अक्नविष्यत्-त ।

१०. द्रूञ्—हिंसायाम्, उभयपदी, सेट् ।

दशलकारेषु—द्रूणाति-द्रूणीते । दुद्राव-दुद्रुवे । द्रवितासि-से । द्रविष्यति-ते । द्रूणातु-द्रूणीताम् । अद्रूणात । द्रूणीयात्-द्रूणीत । द्रूयात्-द्रविषीष्ट । अद्रावीत्-अद्रविष्ट । अद्रविष्यत्-त ।

११. पूञ्—पवने । उभयपदी, सेट् ।

दशलकारेषु—पुनाति[2]-पुनीते । पुपाव-पुपुवे[3] । पवितासि-से । पविष्यति-ते । पुनातु-पुनीताम् । अपुनात्-अपुनीत । पुनीयात्-पुनीत । पूयात्-पविषीष्ट । अपावीत्-अपविष्ट । अपविष्यत्-त ।

1. "जॄस्तम्भुम्रुचु—" से वैकल्पिक च्लि को अङ्, "अनिदिताम्—" न लोप । इसी प्रकार स्तुम्भु आदि सौत्र धातुओं के रूप होंगे, च्लि को अङ् न होगा ।

2. "प्वादीनां ह्रस्वः ।

3. अपित लिट् में उवङ् । निष्ठा-पूतः, पूतवान् । णिच्-पावयति । सन्-पिपविषति-ते ।

## १२. लूञ्—छेदने । उभयपदी, सेट् ।

दशलकारेषु—लुनाति[1]-लुनीते । लुलाव-लुलुवे । लवितासि-से । लविष्यति-ते । लुनातु-लुनीताम् । अलुनात्-अलुनीत । लुनीयात्-लुनीत । लूयात्-लविषीष्ट । अलावीत्-अलविष्ट । अलविष्यत्-त ।

## १३. स्तॄञ्—आच्छादने । उभयपदी, सेट् ।

दशलकारेषु—स्तृणाति-स्तृणीते । तस्तार, तस्तरतुः[2]-तस्तरे । स्तरि-रीतासि-से । स्तरि-रीष्यति-ते । स्तृणातु-स्तृणीताम् । अस्तृणात्-अस्तृणीत । स्तीर्यात्[3]-स्तरिषीष्ट[4], स्तीर्षीष्ट[5] । अस्तारीत्[6]-अस्तरिष्ट[7], अस्तरीष्ट, अस्तीर्ष्ट । अस्तरि-रीष्यत्-अस्तरि-रीष्यत ।

## १४. कॄञ्—हिंसायाम् । उभयपदी, सेट् ।

दशलकारेषु—कृणाति[1]-कृणीते । चकार, चकरतुः-चकरे । करि-रीतासि-से । करि-रीष्यति—ते । कृणातु-कृणीताम् । अकृणात्-अकृणीत । कृणीयात्-कृणीत ।

---

1. निष्ठा-लूनः, लूनवान् । णिच्-लावयति । सन्-लिलविषति ।

2. "ऋतश्च संयोगादे र्गुणः" से अपित् लिट् में भी गुण ।

3. "ऋत इद्धातोः" "हलि च" ।

4. "न लिङि" से इट् को दीर्घ निषेध । "लिङ् सिचोरात्मनेपदेषु" से इट् विकल्प ।

5. "उश्च" ऋत इत, उपधादीर्घ ।

6. अस्तारिष्टाम्, "सिचि च परस्मैपदेषु" इट् का दीर्घ निषेध ।

7. इट् विकल्प, दीर्घ विकल्प । इडभाव में "उश्च" से कित् "ऋत इद्धातोः" "हलि च" ।

8. "ऋवर्णान्तस्य णत्वं वाच्यम ।

कीर्यात्[1]-करिषीष्ट[2], कीर्षीष्ट। अकारीत-अकरि-रीष्ट, अकीष्ट। अकरि-रीष्यत्-त।

१५. वृञ्—वरणे। उभयपदी, सेट्।

दशलकारेषु—वृणाति-वृणीते। ववार-ववरे। वरि-रीतासि-से। वरि रीष्यति—ते। वृणातु-वृणीताम्। अवृणात्-अवृणीत। वृणीयात्-वृणीत। वूर्यात्[3]-वरिषीष्ट, वूर्षीष्ट। अवारीत्। अवारिष्टाम्[4]-अवरिष्ट, अवरीष्ट, अवूर्ष्ट। अवरि-रीष्यत्—त।

१६. धूञ्—कम्पने। उभयपदी, वेट्।

दशलकारेषु—धुनाति-धुनीते। दुधाव, दुधविथ-दुधोथ। धवितासि-से[5], धोतासि-से। धविष्यति—ते, धोष्यति-ते। धुनातु-धुनीताम्। अधुनात्-अधुनीत। धुनीयात्-धुनीत्। धूयात्-धविषीष्ट, धोषीष्ट। अधावीत, अधाविष्टाम्—अधविष्ट, अधोष्ट। अधविष्यत्—त, अधोष्यत्—त।

१७. ग्रह—उपादाने। उभयपदी, सेट्।

दशलकारेषु—गृह्णाति-गृह्णीते। जग्राह, जग्रहिथ-जग्रहे। ग्रहीतासि[6]-से। ग्रहीष्यसि—से। गृह्णाति-गृह्णीताम्। अगृह्णात्-अगृह्णीत। गृह्णीयात्-गृह्णीत। गृह्यात्-ग्रहीषीष्ट। अग्रहीत्[7]-अग्रहीष्ट। अग्रहीष्यत्-त। इत्युभयपदिनः॥

1. "ऋत इद्धातोः" "हलि च"।

2. "लिङ्सिचोरात्मनेपदेषु" इट् विकल्प। "न लिङि" दीर्घ निषेध। 3. "उदोष्ठ्य पूर्वस्य" "हलि च"। 4. "सिचि च परस्मैपदेषु" दीर्घ निषेध। 5. "स्वरति सूति"—वेट्। 6. "ग्रहोऽलिटि दीर्घः"।

7. "ह्म्यन्त क्षणश्वस"—वृद्धि निषेध। निगृह्णाति-पकड़ता है, रोकता है, बांधता है। विगृह्णाति-लड़ाई करता है। अनुगृह्णाति-कृपा करता है। आगृह्णाति-आग्रह (हठ) करता है। प्रतिगृह्णाति-दान लेता है। क्त—गृहीतः। क्त्वा—गृहीत्वा। तुमुन्-ग्रहीतुम्। अनीय-ग्रहणीयम्। अच्-ग्रहः। घञ्-ग्राहः। ल्युट्-ग्रहणम्। ण्वुल्-ग्राहकः। णिच्-ग्राहयति। सन्-जिघृक्षति। यङ्-जगृहीति। कर्म०-गृह्यते।

अथ परस्मैपदिनः ।

१८. कुष्—निष्कर्षे । परस्मैपदी, सेट् ।

दशलकारेषु—कुष्णाति । चुकोष । कोषिता[1] । कोषिष्यति । कुष्णातु । अकुष्णात् । कुष्णीयात् । कुष्यात् । अकोषीत्[2] । अकोषिष्यत ।

१६. अश्—भोजने । परस्मैपदी, सेट् ।

दशलकारेषु—अश्नाति । आश । अशिता । अशिष्यति । अश्नातु[3] । आश्नात् । अश्नीयात् । अश्यात् । आशीत्[4] । आशिष्यत् ।

२०. ज्ञा – अवबोधने । परस्मैपदी, अनिट् ।

दशलकारेषु—जानाति । जज्ञौ । ज्ञाता । ज्ञास्यति । जानातु[5] । अजानात् । जानीयात् । ज्ञायात्[6]-ज्ञेयात् । अज्ञासीत् । अज्ञास्यत् ।

२१. पॄ—पालनपूरणयोः । परस्मैपदी, सेट् ।

दशलकारेषु—पृणाति । पपार, पप्रतुः पपरतुः[7] । परि-रीता । परि-रीष्यति । पृणातु । अपृणात् । पृणीयात् । पूर्यात्[8] । अपारीत् । अपरि-रीष्यत् ।

---

1. "निरः कुषः" से इट् विकल्प होकर-निष्कोषिता, निष्कोष्टा ।
2. इडभाव में क्स हो कर निरकुक्षत् ।
3. मध्यम पु०-अशान"—"हलः श्नः शानज्झौ" ।
4. "नेटि" मा भवानशीत् ।
5. जानीताम्, जानन्तु । जानीहि ।
6. "वाऽन्यस्य संयोगादेः" ।
7. "शॄदॄप्रां ह्रस्वो वा" ह्रस्वपक्ष में यण् ।
8. "उदोष्ठ्यपूर्वस्य" "हलि च" ।

२२. शॄ—हिंसायाम । परस्मैपदी, सेट् ।

दशलकारेषु—शृणाति । शशार, शश्रतुः[1], शशरतुः । शरि-रीता । शरि-रीष्यति । शृणातु । अशृणात् । शृणीयात् । शीर्यात् । अशारीत् । अशरि-रीष्यत् ।

२३. दॄ—विदारणे । परस्मैपदी, सेट् ।

दशलकारेषु—दृणाति । ददार, दद्रतुः, ददरतुः । दरि-रीता । दरि-रीष्यति । दृणातु । अदृणात् । दृणीयात् । दीर्यात्[2] । अदारीत् । अदरि-रीष्यत् ।

२४. जॄ—वयोहानौ । परस्मैपदी, सेट् ।

दशलकारेषु—जृणाति । जजार, जजरतुः[3] । जरि-रीता । जरि-रीष्यति । जृणातु । अजृणात् । जृणीयात् । जीर्यात् । अजारीत्, अजारिष्टाम् । अजरि-रीष्यत् ।

२५. मुष—स्तेये । परस्मैपदी, सेट् ।

दशलकारेषु—मुष्णाति । मुमोष । मोषिता । मोषिष्यति । मुष्णातु[4] । अमुष्णात् । मुष्णीयात् । मुष्यात् । अमोषीत् । अमोषिष्यत् ।

२६. पुष—पुष्टौ । परस्मैपदी, सेट् ।

दशलकारेषु—पुष्णाति । पुपोष । पोषिता । पोषिष्यति । पुष्णातु । अपुष्णात् । पुष्णीयात् । पुष्यात् । अपोषीत् । अपोषिष्यत् ।

२७ बन्ध-बन्धने । परस्मैपदी, अनिट् ।

दशलकारेषु—बध्नाति । बबन्ध, बबन्धिथ, बबन्ध । बन्द्धा ।

---

1. "शॄदॄपां ह्रस्वो वा" ।
2. "ॠत इद्धातोः" ।
3. "ॠच्छत्यॄताम्" से गुण ।
4. मध्यम-पु०-मुषाण ।

भन्त्स्यति। बध्नातु, बधान। अबध्नात्। बध्नीयात्। बध्यात्। अभान्त्सीत्[1]। अभन्त्स्यत्।

२८ क्लिशू—विबाधने। परस्मैपदी, वेट्।

दशलकारेषु—क्लिश्नाति। चिक्लेश। क्लेशिता, क्लेष्टा। क्लेशिष्यति-क्लेक्ष्यति। क्लिश्नातु[2]। अक्लिश्नात्। क्लिश्नीयात्। क्लिश्यात्। अक्लेशीत्-अक्लिक्षत्। अक्लेशिष्यत्-अक्लेक्ष्यत्।

२९ वृङ्—सम्भक्तौ। आत्मनेपदी, सेट्।

दशलकारेषु—वृणीते, वृणाते, वृणते। वव्रे, वव्राते, वव्रिरे। वरि-रीता। वरि-रीष्यते। वृणीताम्। अवृणीत। वृणीत। वरि-रीषीष्ट-वर्षीष्ट[3]। अवरि-रीष्ट-अवृत। अवरि-रीष्यत।

इति क्र्यादिगणः।

---

1. "एकाचो बशोभष्..."। हलन्त लक्षणवृद्धि। अभान्ताम्।

2. क्लिशान।

3. "लिङ् सिचोरात्मनेपदेषु" इट् विकल्प, इडभाव में "उदोष्ठ्य-पूर्वस्य"।

# अथ चुरादि प्रकरणम्

## १ चुर—स्तेये, उभयपदी, सेट्।

दशलकारेषु—चोरयति[1]-चोरयते । चोरयामास-मासे । चोरयितासि-से । चोरयिष्यति-ते । चोरयतु-ताम् । अचोरयत्-त । चोरयेत्-त । चोर्यात्-चोरयिषीष्ट । अचूचुरत्-त । अचोरयिष्यत्-त ।

## २ चिति—स्मृत्याम् । उभयपदी, सेट्।

दशलकारेषु—चिन्तयति-ते । चिन्तयामास-से, चिन्तयाम्बभूव[2]-वे । चिन्तयितासि-से । चिन्तयिष्यति-ते । चिन्तयतु-ताम् । अचिन्तयत्-त । चिन्तयेत्-त । चिन्त्यात्[2]-चिन्तयिषीष्ट । अचिचिन्तत्-त । अचिन्तयिष्यत्-त ।

## ३ यत्रि—सङ्कोचे । उभयपदी, सेट् ।

दशलकारेषु—यन्त्रयति-ते । यन्त्रयामास-से । यन्त्रयितासि-से । यन्त्रयिष्यति-ते । यन्त्रयतु-ताम् । अयन्त्रयत्-त । यन्त्रयेत्-त । यन्त्र्यात्-यन्त्रयिषीष्ट । अययन्त्रत्-त । अयन्त्रयिष्यत्-त ।

---

1. सभी णिजन्त धातु उभयपदी होंगे।

2 आमन्त से कृ, भू, अस् का अनुप्रयोग होता ही है, विस्तार भय से कभी किसी के रूप छोड़ दिये गये हैं । णिच् के व्यवधान होने से "अनिदिताम्..." से न लोप नहीं होता । मतान्तर से चुरादिगण के सभी इदित् धातुओं को णिच् का विकल्प है । इसलिये णिच् के अभाव में-चिन्तति । चिचिन्त । चिन्तिता । चिन्तिष्यति । चिन्ततु । अचिन्तत् । चिन्तेत् । चिन्त्यात् । अचिन्तीत् । अचिन्तिष्यत्—इत्यादि रूप भी होंगे । सभी इदितों में इसी तरह चाहे हम न भी लिखें जान लेना ।

४ कुद्रि—अनृतभाषणे । उभयपदी, सेट् ।

दशलकारेषु—कुन्द्रति-ते । कुन्द्रयामास-से । कुन्द्रयितासि-से । कुन्द्रयिष्यति-कुन्द्रयिष्यते । कुन्द्रयतु-ताम् । अकुन्द्रयत्-त । कुन्द्रयेत्-त । कुन्द्र्यात्-कुन्द्रयिषीष्ट । अचुकुन्द्रत्-त ।अकुन्द्रयिष्यत्-त ।

५ तन्त्रि—कुटुम्बधारणे । आत्मनेपदी, सेट् ।

दशलकारेषु—तन्त्रयते । तन्त्रयाञ्चक्रे, मासे, बभूवे । तन्त्रयितासे । तन्त्रयिष्यते । तन्त्रयताम् । अतन्त्रयत । तन्त्रयेत । तन्त्रयिषीष्ट । अततन्त्रत । अतन्त्रयिष्यत ।

६ मन्त्रि—गुप्तभाषणे । आत्मनेपदी, सेट् ।

दशलकारेषु—मन्त्रयते । मन्त्रयाञ्चक्रे-मासे-बभूवे । मन्त्रयितासे । मन्त्रयिष्यते । मन्त्रयताम् । अमन्त्रयत । मन्त्रयेत । मन्त्रयिषीष्ट । अममन्त्रत[1] । अमन्त्रयिष्यत ।

७ स्फुडि—परिहासे । उभयपदी, सेट् ।

दशलकारेषु—स्फुण्डयति-ते[2] । स्फुण्डयाञ्चकार-क्रे । स्फुण्डयिता । स्फुण्डयिष्यति-ते । स्फुण्डयतु-स्फुण्डयताम् । अस्फुण्डयत्-त । स्फुण्डयेत्-त । स्फुण्ड्यात्-स्फुण्डयिषीष्ट । अपुस्फुण्डत्-त । अस्फुण्डयिष्यत्-त ।

८ पीड—अवगाहे । सेट् ।

दशलकारेषु—पीड़यति । पीड़याञ्चकार । पीड़यिता । पीड़यिष्यति । पीड़यतु । अपीडत् । पीड़येत् । पीड्यात् । अपीपिड़त्[3]-अपिपीड़त् । अपीड़यिष्यत् ।

९ प्रथ—प्रख्याने, सेट् ।

दशलकारेषु—प्रथयति । प्रथयाञ्चकार । प्रथयिता । प्रथयिष्यति ।

1. अभ्यास लघुपरक हो तो सन्वद्भाव होता है, अन्यथा नहीं ।

2. णिच् के अभाव में स्फुण्डति, पुस्फुण्ड, अस्फुण्डीत् इत्यादि ।

3. "भ्राजभास भाषदीपजीव मीलपीड़ा मन्यतरस्याम्" से उपधा को विकल्प से ह्रस्व ।

प्रथयतु । अप्रथयत् । प्रथयेत् । प्रथ्यात् । अपप्रथत्[1] । अप्रथयिष्यत्

१० पृथ—प्रक्षेपे, सेट् ।

दशलकारेषु—पर्थयति । पर्थयाञ्चकार । पर्थयिता । पर्थयिष्यति पर्थयतु । अपर्थयत् । पर्थयेत् । पर्थ्यात् । अपीपृथत्[2]-अपपर्थत् । अपर्थयिष्यत् ।

११ लुण्ठ—स्तेये, सेट् ।

दशलकारेषु—लुण्ठयति । लुण्ठयाञ्चकार । लुण्ठयिष्यति । लुण्ठयतु । लुण्ठ्यात् । अलुलुण्ठत्[3] । अलुण्ठयिष्यत् ।

१२ तड़—आघाते । सेट् ।

दशलकारेषु—ताडयति । ताड़यामास । ताडयिता । ताडयिष्यति । ताड़यतु । अताड़यत् । ताडयेत् । ताड़्यात् । अतीतड़त् । अताड़यिष्यत् ।

१३ मडि—भूषायां, हर्षे च । सेट ।

दशलकारेषु—मण्डयति । मण्डयामास । मण्डयिता । मण्डयिष्यति । मण्डयतु । अमण्डयत् । मण्डयेत् । मण्ड्यात् । अममण्डत् । अमण्डयिष्यत् ।

१४ भडि—कल्याणे । सेट् ।

दशलकारेषु—भण्डयति । भण्डयामास । भण्डयिता । भण्डयिष्यति । भण्डयतु । अभण्डयत । भण्डयेत् । भण्ड्यात् । अबभण्डत् । अभण्डयिष्यत् ।

१५ छर्द—वमने । सेट् ।

दशलकारेषु—छर्दयति । छर्दयामास । छर्दयिता । छर्दयिष्यति ।

---

1. "अत्स्मृदृत्वर प्रथम्रदस्तृस्पशाम्" से अभ्यास को अकार ।

2. "उऋत्" से उपधा ऋवर्ण को ऋत्, ऋत्करण सामर्थ्य से लघूपधगुणाभाव, पृथ् को द्वित्व, 'उरत्' । सन्वद्भाव, इत्व, "दीर्घो लघोः" ।

3. अभ्यास से परे लघु नहीं, अतः सन्वद्भाव न हुआ ।

छर्दयतु । अच्छर्दयत् । छर्दयेत् । छर्द्यात् । अचच्छर्दत् । अच्छर्दयिष्यत् ।

१६ चुद—संचोदने । सेट्।

दशलकारेषु—चोदयति । चोदयामास । चोदयिता । चोदयिष्यति । चोदयतु । अचोदयत् । चोदयेत् । चोद्यात् । अचूचुदत् । अचोदयिष्यत् ।

१७ पाल—रक्षणे । सेट्।

द०ल०—पालयति । पालयामास । पालयिता । पालयिष्यति । पालयतु । अपालयत् । पालयेत् । पाल्यात् । अपीपलत् । अपालयिष्यत् ।

१८ पूज—पूजायाम्। सेट ।

दशल०—पूजयति । पूजयामास । पूजयिता । पूजयिष्यति । पूजयतु । अपूजयत् । पूजयेत् । पूज्यात् । अपूपुजत् । अपूजयिष्यत् ।

१९. कृत—संशब्दने । सेट् ।

द०ल०— कीर्तयति । कीर्तयामास । कीर्तयिता । कीर्तयतु । अकीर्तयत् । कीर्तयेत् । कीर्त्यात् । अचिकीर्तत् । अकीर्तयिष्यत्[1] ।

२०. म्लेच्छ—अव्यक्तायां वाचि । सेट्।

द० ल०—म्लेच्छयति । म्लेच्छयामास । म्लेच्छयिता । लेच्छयिष्यति । म्लेच्छयतु । अम्लेच्छयत् । म्लेच्छयेत् । म्लेच्छ्यात् । अमिम्लेच्छत् । अम्लेच्छयिष्यत् ।

२१. ईड—स्तुतौ । सेट्।

द० ल०—ईडयति । ईडयामास । ईडयिता । ईडयिष्यति ।

---

1. "उपधायश्च" से इत्त्व, "उपधायाञ्च" से दीर्घ ।

ईडयतु । एेडयेत्[1] ईड्यात् । एेडिडत्[2] । एेडिष्यत् ।

२२. पिडि—सङ्घाते । सेट् ।

द० ल०—पिण्डयति[3] । पिण्डयाञ्चकार । पिण्डयिता । पिण्डयिष्यति । पिण्डयतु । अपिण्डयत् । पिण्डयेत् । पिण्ड्यात् । अपिपिण्डत् । अपिण्डयिष्यत् ।

२३ रुप—रोपे सेट् ।

द० ल०—रोपयति । रोपयाञ्चकार । रोपयिता । रोपयिष्यति । रोपयतु । अरोपयत् । रोपयेत् । रोप्यात् । अरूरुपत् । अरोपयिष्यत् ।

२४ तुल—उन्माने । सेट् ।

द० ल०—तोलयति । तोलयाञ्चकार । तोलयिता । तोलयिष्यति । तोलयतु । अतोलयत् । तोलयेत् । तोल्यात् । अतूतुलत् । अतोलयिष्यत् ।

२५ शुल्व—माने । सेट् ।

द० ल०—शुल्वति । शुल्वयाञ्चकार । शुल्वयिता । शुल्वयिष्यति । शुल्वयतु । अशुल्वयत् । शुल्वयेत् । शुल्व्यात् । अशुशुल्वत् । अशुल्वयिष्यत् ।

२६ घुसिर्—विशब्दने, सेट् ।

द० ल०—घोषयति । घोषयाञ्चकार । घोषयिता । घोषयिष्यति । घोषयतु । अघोषयत् । घोषयेत् । घोष्यात् । अजूघुषत् । अघोषयिष्यत् ।

---

1. "आटश्च" ।

2. "अजादेस्तु द्वितीयस्य" दूसरे एकाच् अवयव 'डि' को द्वित्व हुआ ।

3. णिच् के अभाव में पिण्डति, पिपिण्ड, अपिण्डीत् इत्यादि ।

२७ पट—भाषायाम् । सेट् ।

द०ल०—पाटयति । पाटयाञ्चकार । पाटयिता । पाटयिष्यति । पाटयतु । अपाटयत् । पाटयेत् । पाट्यात् । अपूपुटत् । अपाटयिष्यत् ।

२८ पुट—भाषार्थः । सेट् ।

द० ल०—पोटयति । पोटयाञ्चकार । पोटयिता । पोटयिष्यति । पोटयतु । अपोटयत् । पोटयेत् । पोट्यात् । अपूपुटत् । अपोटयिष्यत् ।

२९ लुट्—भाषार्थः । सेट् ।

द० ल०—लोटयति । लोटयामास । लोटयिता । लोटयिष्यति । लोटयतु । अलोटयत् । लोटयेत् । लोट्यात् । अलूलुटत् । अलोटयिष्यत् ।

३० तुजि—भाषार्थः । सेट् ।

द० ल०—तुञ्जयति[1] । तुञ्जयामास । तुञ्जयिता । तुञ्जयिष्यति । तुञ्जयतु । अतुञ्जयत् । तुञ्जयेत् । तुञ्ज्यात् । अतुतुञ्जत् । अतुञ्जयिष्यत् ।

३१. मिजि[2]—भाषार्थः । सेट् ।

दशलकारेषु—मिञ्जयति । मिञ्जयाञ्चकार । मिञ्जयिष्यति । मिञ्जयतु । अमिञ्जयत् । मिञ्जयेत् । मिञ्ज्यात् । अमिमिञ्जत् । अमिञ्जयिष्यत् ।

३२. पिजि—भाषार्थः । सेट् ।

दशलकारेषु—पिञ्जयति । पिञ्जयाञ्चकार । पिञ्जयिता । पिञ्जयिष्यति । पिञ्जयतु । अपिञ्जयत् । पिञ्जयेत् । पिञ्ज्यात् । अपिपिञ्जत् । अपिञ्जयिष्यत् ।

३३. लुजि—भाषार्थः । सेट् ।

दशलकारेषु—लुञ्जयति । लुञ्जयाञ्चकार । लुञ्जयिता । लुञ्जयिष्यति ।

---

1. पक्षे-तुञ्जति इत्यादि ।
2. पक्ष में—मिञ्जति इत्यादि । एवं सभी इदितों में ।

लुञ्जयतु । अलुञ्जयत् । लुञ्ज्यात् । अलुलुञ्जत् । अलुञ्जयिष्यत् ।

३४. मजि—भाषार्थः । सेट् ।

दशलकारेषु—मञ्जयति । मञ्जयाञ्चकार । मञ्जयिता । मञ्जयिष्यति । मञ्जयतु । अमञ्जयत् । मञ्जयेत् । मञ्ज्यात् । अममञ्जत् । अमञ्जयिष्यत् ।

३५. लघि—भाषार्थः । सेट् ।

दशलकारेषु—लङ्घयति । लङ्घयाञ्चकार । लङ्घयिता । लङ्घयिष्यति । लङ्घयतु । अलङ्घयत् । लङ्घयेत् । लङ्घ्यात् । अललङ्घत । अलङ्घयिष्यत् ।

३६. त्रसि—भाषार्थः । सेट् ।

दशलकारेषु—त्रंसयति । त्रंसयाञ्चकार । त्रंसयिता । त्रंसयिष्यति । त्रंसयतु । अत्रंसयिष्यत । त्रंसयेत् । त्रंस्यात् । अतत्रंसत् । अत्रंसयिष्यत् ।

३७. पिसि—भाषार्थः । सेट् ।

दशलकारेषु—पिंसयति । पिंसयाञ्चकार । पिंसयिष्यति । पिंसयतु । अपिंसयत् । पिंसयेत । अपिपिंसत् । अपिंसयिष्यत् ।

३८. कुसि—भाषार्थः । सेट् । पिसिवत् रूपाणि ।

३९. दसि—भाषार्थ । सेट् ।

दशलकारेषु—दंसयति । दंसयाञ्चकार । दंसयिता । दंसयिष्यति । दंसयतु । अदंसयत् । दंसयेत् । दंस्यात् । अददंसत् । अदंसयिष्यत् ।

४०. कुशि—भाषार्थः । सेट् ।

दशलकारेषु—कुंशयति । कुंशयाञ्चकार । कुंशयिता । कुंशयिष्यति । कुंशयतु । अकुंशयत् । कुंशयेत् । कुंश्यात् । अचुकुंशत् । अकुंशयिष्यत् ।

४१. घट—भाषार्थः । सेट् ।

दशलकारेषु—घाटयति । घाटयञ्चकार । घाटयिता । घाटयिष्यति । घाटयतु । अघाटयत् । घाटयेत् । घाट्यात् । अजीघटत् । अघाटयिष्यत् ।

४२. घटि—भाषार्थः । सेट् ।

दशलकारेषु—घण्टयति । घण्टयाञ्चकार । घण्टयिता । घण्टयिष्यति । घण्टयतु । अघण्टयत् । घण्टयेत् । घण्ट्यात् । अजिघण्टत् । अघण्टयिष्यत् ।

४३. बृहि—भाषार्थः । सेट् ।

दशलकारेषु—बृंहयति । बृंहयाञ्चकार । बृंहयिता । बृंहयिष्यति । बृंहयतु । अबृंहयत् । बृंहयेत् । बृंह्यात् । अबिबृंहत् । अबृंहयिष्यत् ।

४४. बर्ह—भाषार्थः । सेट् ।

दशलकारेषु—बर्हयति । बर्हयाञ्चकार । बर्हयिता । बर्हयिष्यति । बर्हयतु । अबर्हयत् । बर्हयेत् । बर्ह्यात् । अबबर्हत् । अबर्हयिष्यत् ।

४५. वल्ह—भाषार्थः । सेट् ।

दशलकारेषु—बल्हयति । बल्हयाञ्चकार । वल्हयिता । वल्हयिष्यति । बल्हयतु । अबल्हयत् । बल्हयेत् । बल्ह्यात् । अबबल्हत् । अबल्हयिष्यत् ।

४६. गुप—भाषार्थः । सेट् ।

दशलकारेषु—गोपयति । गोपयामास । गोपयिता । गोपयिष्यति । गोपयतु । अगोपयत् । गोपयेत् । गोप्यात् । अजूगुपत् । अगोपयिष्यत् ।

४७. धूप—भाषार्थः । सेट् ।

दशलकारेषु—धूपयति । धूपयाञ्चकार । धूपयिता । धूपयिष्यति । धूपयतु । अधूपयत् । धूपयेत् । धूप्यात् । अदूधूपत् । अधूपयिष्यत् ।

४८. विच्छ—भाषार्थः । सेट् ।

दशलकारेषु—विच्छयति । विच्छयाञ्चकार । विच्छयिता । बिच्छयिष्यति । विच्छयतु । अविच्छयत् । विच्छयेत् । विच्छ्यात् । अविविच्छत् । अविच्छयिष्यत् ।

४९. चीव—भाषार्थः । सेट् ।

दशलकारेषु—चीवयति । चीवयाञ्चकार । चीवयिता । चीवयिष्यति ।

चीवयतु । अचीवयत् । चीवयेत् । चीव्यात् । अचीचिवत् । अचीवयिष्यत् ।

५०. पुथ—भाषार्थः । सेट् ।

दशलकारेषु—पोथयति । पोथयामास । पोथयिता । पोथयिष्यति । पोथयतु । अपोथयत् । पोथयेत् । पोथ्यात् । अपूपुथत् । अपोथयिष्यत् ।

५१. लोकृ—भाषार्थः । सेट् ।

दशलकारेषु—लोकयति । लोकयामास । लोकयिता । लोकयिष्यति । लोकयतु । अलोकयत् । लोकयेत् । लोक्यात् । अलुलोकत्[1] । अलोकयिष्यत् ।

५२. लोचृ—भाषार्थः । सेट् ।

दशलकारेषु—लोचयति । लोचयामास । लोचयिता । लोचयिष्यति । लोचयतु । अलोचयत् । लोचयेत् । लोच्यात् । अलुलोचत् । अलोचयिष्यत् ।

५३. णद—भाषार्थः । सेट् ।

दशलकारेषु—नादयति । नादयामास । नादयिता । नादयिष्यति । नादयतु । अनादयत् । नादयेत् । नाद्यात् । अनीनदत् । अनादयिष्यत् ।

५४. कुप—भाषार्थः । सेट् ।

दशलकारेषु—कोपयति । कोपयामास । कोपयिता । कोपयिष्यति । कोपयतु । अकोपयत् । कोपयेत् । कोप्यात् । अचूकुपत् । अकोपयिष्यत् ।

५५. तर्क—भाषार्थः । सेट् ।

दशलकारेषु—तर्कयति । तर्कयामास । तर्कयिता । तर्कयिष्यति । तर्कयतु । अतर्कयत् । तर्कयेत् । तर्क्यात् । अततर्कत् । अतर्कयिष्यत् ।

५६. वृतु – भाषार्थः । सेट् ।

दशलकारेषु—वर्तयति । वर्तयामास । वर्तयिता । वर्तयिष्यति ।

---

1. "नाग्लोपिशास्वृदिताम्" से उपधाह्रस्व निषेध, अभ्यास से परे लघु न होने से सन्वद् भाव न हुआ ।

वर्तयतु । अवर्तयत् । वर्तयेत् । वर्त्यात् । अववर्तत् । अवर्तयिष्यत् ।

५७. वृधु—भाषार्थः । सेट् ।

दृ० ल०—वर्धयति । वर्धयामास । वर्धयिता । वर्धयिष्यति । वर्धयतु । अवर्धयत् । वर्धयेत् । वर्ध्यात् । अवीवृधत् । अवर्धयिष्यत् ।

५८ युज[1]—संयमने । सेट् (णि० वि०) ।

दृ० ल०—योजयति । योजयमास । योजयिता । योजयिष्यति । योजयतु । अयोजयत् । योजयेत् । योज्यात् । अयूयुजत् । अयोजयिष्यत् ।

५६ पृच—संयमने । से० (णि० वि०)

दृ० ल०—पर्चयति । पर्चयामास । पर्चयिता । पर्चयिष्यति । पर्चयतु । अपर्चयत् । पर्चयेत् । पर्च्यात् । अपीपृचत् । अपर्चयिष्यत ।

६० अर्च—पूजायाम् से० (णि० वि०)

दृ०ल०—अर्चयति । अर्चयामास । अर्चयिता । अर्चयिष्यति । अर्चयतु । आर्चयत् । अर्चयेत् । अर्च्यात् । आर्चिचत् । आर्चयिष्यत् ।

६१ षह—मर्षणे । से० (णि० वि०)

दृ०ल०—साहयति । साहयाञ्चकार । साहयिष्यति । साहयतु । असाहयत् । साहयेत । साह्यात् । असीषहत्[2] । असाहयिष्यत् ।

६२ वृञ्—वरणे । से० (णि० वि०)

दृ० ल०—वारयति, वारयते । वारयामास । वारयिता ।

---

1. धृष् तक णिच् विकल्प है । णिच् के अभाव में-योजति, युयोज, अयोजीत् इत्यादि रूप भ्वादिगण के समान होंगे ।

2. णिच् के अभाव में-असाहीत, असहीत् ।

वारयिष्यति-ते । वारयतु-ताम् । अवारयत्-त । वारयेत्-त । वार्यात्-वारयिषीष्ट[1] । अवीवरत्-त । अवारयिष्यत्-त ।

६३. जॄ—वयोहानौ । से. ( णि० वि० )

दशलकारेषु जारयति । जारयामास । जारयिता । जारयिष्यति । जारयतु । अजारयत् । जारयेत् । जार्यात् । अजीजरत् । अजारयिष्यत्[2] ।

६४. शिष—असर्वोपयोगे । से० ( णि० वि० ) ।

दशलकारेषु—शेषयति । शेषयामास । शेषयिता । शेषयिष्यति । शेषयतु । अशेषयत् । शेषयेत् । शेष्यात् । अशीशिषत्[3] । अशेषयिष्यत् ।

६५. तप—दाहे । से० ( णि० वि० )

दशलकारेषु—तापयति । तापयामास । तापयिता[4] । तापयिष्यति । तापयतु । अतापयत् । तापयेत् । ताप्यात् । अतीतपत् । अतापयिष्यत् ।

६६. तृप—तृप्तौ । से० ( णि० वि० )

दशलकारेषु—तर्पयति । तर्पयामास । तर्पयिता[5] । तर्पयिष्यति । तर्पयतु । अतर्पयत् । तर्पयेत् । तर्प्यात् । अतीतृपत् । अतर्पयिष्यत् ।

६७. हिंसी—हिंसायाम् । से० ( णि० वि० )

दशलकारेषु—हिंसयति । हिंसयामास । हिंसयिता । हिंसयिष्यति । हिंसयतु । अहिंसयत् । हिंसयेत् । हिंस्यात् । अजिहिंसत् । अहिंसयिष्यत् ।

---

1. पक्षे-वरि-रीषीष्ट ।

2. पक्षे—जरति । अजारीत् ।

3. पक्षे—शेष्टा । अशिक्षत् ( क्स ) ।

4. पक्षे—तपति । तप्ता । अताप्सीत् ।

5. पक्षे—तर्पिता, त्रर्प्ता, त्रप्ता । तर्प्स्यति, त्रप्स्यति । लङ्-अतृपत्, अतार्प्सीत्-अत्राप्सीत् । स्पृशमृशतृप''—से सिच् विकल्प ।

### ६८. अर्ह—पूजायाम् । से० ( णि० वि० )

द० ल०—अर्हयति । अर्हयमास[1] । अर्हयिता । अर्हयिष्यति । अर्हयतु । आर्हयत् । अर्हयेत् । अर्ह्यात् । आर्हिहत् । आर्हिष्यत् ।

### ६९ छद्—अपवारणे । से० (णि० वि०)

द० ल०—छादयति । छादयामास[2] । छादयिता । छादयिष्यति । छादयतु । अच्छादयत् । छादयेत् । छाद्यात् । अचीच्छदत्[3] । अच्छादयिष्यत् ।

### ७०. धून्—कम्पने । से. ( णि. वि. )

दशलकारेषु—धूनयति । धूनयामास । धूनयिता । धूनयिष्यति । धूनयतु । अधूनयत् । धूनयेत् । धून्यात् । अदूधुनत् । अधूनयिष्यत् ।

### ७१. प्रीन्—तर्पणे । से. ( णि. वि. )

दशलकारेषु—प्रीणयति[4] । प्रीणयामास । प्रीणयिता । प्रीणयिष्यति । प्रीणयतु । अप्रीणयत् । प्रीणयेत् । प्रीण्यात् । अपीप्रणत् । अप्रीणयिष्यत् ।

### ७२. वच—परिभाषणे । सेट् ।

दशलकारेषु—वाचयति । वाचयामास । वाचयिता । वाचयिष्यति । वाचयतु । अवाचयत् । वाचयेत् । वाच्यात् । अवावचत् । अवाचयिष्यत् ।

### ७३. मान—पूजायाम् । सेट् ।

दशलकारेषु—मानयति । मानयामास । मानयिता । मानयिष्यति ।

1. पक्षे—हिंसति । अहिंसीत् ।

2. पक्षे—छदति । लु.—अच्छादीत्, अच्छदिष्ट ।

3. "धूञ्प्रीञो नुक्" ।

4. पक्षे—प्रयाति-ते ।

5. णिच् के अभाव में—वचति । उवाच । वक्ता । वक्ष्यति । वचतु । अवचत् । वचेत् । उच्यात् । अवाक्षीत् ।

मानयतु । अमानयत् । मानयेत् । मान्यात् । अममानत् । अमानयिष्यत्[1] ।

७४. भू—प्राप्तौ । सेट् । आत्मनेपदी ।

दशलकारेषु—भावयति । भावयाञ्चक्रे-मासे-बभूवे । भावयिता । भावयिष्यते । भावयताम् । अभावयत । भावयेत । भावयिषीष्ट । अबीभवत । अभावयिष्यत[2] ।

७५. मार्ग—अन्वेषणे । सेट् ।

दशलकारेषु—मार्गयति । मार्गयामास । मार्गयिता । मार्गयिष्यति । मार्गयतु । अमार्गयत् । मार्गयेत् । मार्ग्यात् । अममार्गत् । अमार्गयिष्यत्[3] ।

७६. धृप—सहने । सेट् ।

दशलकारेषु—धर्षयति । धर्षयामास । धर्षयिता । धर्षयिष्यति धर्षयतु । अधर्षयत् । धर्षयेत् । धर्ष्यात् । अदीधृषत्-अदधर्षत् । अधर्षयिष्यत्[4] । इत्याधृषीयाः[5] ॥

अथादन्ताः ।

---

1. णिजभाव में – मानति । ममान । मानिता । मानिष्यति । मानतु । अमानत् । मानेत् । मान्यात् । अमानीत् अमानिष्यत् ।

2. णिच् के अभाव में—भवते । बभूवे । भविता । भविष्यते । भवताम् । अभवत । भवेत । भविषीष्ट । अभविष्ट । अभविष्यत । यदि णि सहित को ही आत्मनेपद माना जाय तो भवति इत्यादि भ्वादिगण तुल्य रूप होंगे ।

3. णिजभाव में मार्गति । ममार्ग । मार्गिता । मार्गिष्यति । मार्गतु । अमार्गत् । मार्गेत् । मार्ग्यात् । अमार्गीत् । अमार्गिष्यत् ।

4. णिजभाव में—धर्षति । दधर्ष । धर्षिता । धर्षिष्यति । धर्षतु । अधर्षत् । धर्षेत् । धृष्यात् । अधर्षीत् । ( नोट ) । अधर्षिष्यत् ।

5. युज् से धृप् तक णिच् का विकल्प था

७७. कथ—वाक्य प्रबन्धे[1]। सेट्।

दशलकारेषु—कथयति[2]। कथयामास-ञ्चकार-म्बभूव। कथयिता। कथयिष्यति। कथयतु। अकथयत्। कथयेत्। कथ्यात्[3]। अचकथत्[4]। अकथयिष्यत्।

७८. गण—संख्याने। सेट्

दशलकारेषु—गणयति। गणयामास। गणयिता। गणयिष्यति। गणयतु। अगणयत्। गणयेत्। गण्यात्। अजीगणत्-अजगणत्[5]। अगणिष्यत्।

७९. रच—प्रतियत्ने। सेट्।

दशलकारेषु—रचयति। रचयामास। रचयिता। रचयिष्यति। रचयतु। अरचयत्। रचयेत्। रच्यात्। अररचत्। अरचयिष्यत्।

८०. कल[6]—गतौ, संख्याने च। सेट्।

दशलकारेषु—कलयति। कलयामास। कलयिता। कलयिष्यति। कलयतु। अकलयत्। कलयेत्। कल्यात्। अचकलत्। अकलयिष्यत्।

८१. मह—पूजायाम्। सेट्।

दशलकारेषु—महयति। महयामास। महयिता। महयिष्यति। महयतु। अमहयत्। महयेत्। मह्यात्। अममहत्। अमहयिष्यत्।

---

1. अदन्त होने से ये धातु अग्लोपी हैं, अतः "नाग्लोपिशास्—" से उपधाह्रस्व तथा दीर्घ सन्वद्भाव न होंगे।

2. अल्लोप के स्थानिवद् भाव से वृद्धि न हुई।

3. "णेरनिटि" से णिलोप।

4. अग्लोपी होने से दीर्घ, सन्वद् भाव न हुए।

5. "ईच गणः" से अभ्यास को ईकार और अकार।

6. कल धातु अनेकार्थक है। कलिः कवीनां कामधेनुः।

८२. सूच—पैशुन्ये । सेट् ।

दशलकारेषु—सूचयति । सूचयामास । सूचयिता । सूचयिष्यति । सूचयतु । असूचयत् । सूचयेत् । सूच्यात् । असुसूचत्[1] । असूचयिष्यत् ।

८३. कुमार—क्रीडायाम् । सेट् ।

दशलकारेषु—कुमारयति । कुमारयामास । कुमारयिता । कुमारयिष्यति । कुमारयतु । अकुमारयत् । कुमारयेत् । कुमार्यात्[2] । अचुकुमारत् । अकुमारयिष्यत् ।

८४. ऊन—परिहाणे । सेट् ।

दशलकारेषु—ऊनयति । ऊनयामास । ऊनयिता । ऊनयिष्यति । ऊनयतु । औनयत्[3] । ऊनयेत् । ऊन्यात् । औननत्[4] । औनयिष्यत् ।

८५. ध्वन—शब्दे । सेट् ।

दशलकारेषु—ध्वनयति । ध्वनयामास । ध्वनयिता । ध्वनयिष्यति । ध्वनयतु । अध्वनयत् । ध्वनयेत् । ध्वन्यात् । अदध्वनत् । अध्वनयिष्यत् ।

८६. सूत्र—वेष्टने । सेट् ।

दशलकारेषु—सूत्रयति । सूत्रयाञ्चकार-मास-म्बभूव । सूत्रयिता । सूत्रयिष्यति । सूत्रयतु । असूत्रयत् । सूत्रयेत् । सूत्र्यात् । असुसूत्रत् । असूत्रयिष्यत् ।

८७. मूत्र—प्रस्रवणे । सेट् ।

दशलकारेषु—मूत्रयति । मूत्रयामास । मूत्रयिता । मूत्रयिष्यति ।

---

1. षोपदेश न होने से षत्व न हुआ ।

2. "आटश्च" ।

3. "णिच्यच आदेशो न द्वित्वे कर्तव्ये"—अल्लोप से प्रथम द्वित्व, फिर उत्तर खण्ड में अल्लोप । यदि द्वित्व से पूर्व अल्लोप करें तो 'नि' को द्वित्व होकर 'औनिनत्' ऐसा अशुद्ध रूप हो जाता ।

मूत्रयतु । असूत्रयत् । मूत्रयेत् । मूत्र्यात् । असुमूत्रत् । असूत्रयिष्यत् ।

८८. पद—गतौ । आ. प. सेट् ।

दशलकारेषु—पदयते । पदयामासे-श्चक्रे । पदयिता । पदयिष्यते । पदयताम् । अपदयत् । पदयेत् । पदयिषीष्ट । अपपदत् । अपदयिष्यत ।

८९. गृह—ग्रहणे । आ. प. सेट् ।

दशलकारेषु—गृहयते । गृहयामासे-श्चक्रे । गृहयिता । गृहयिष्यते । गृहयताम् । अगृहयत । गृहयेत । गृहयिषीष्ट । अजगृहत । अगृहयिष्यत ।

९०. मृग—अन्वेषणे । आ. प. सेट् ।

दशलकारेषु—मृगयते । मृगयामासे । मृगयिता । मृगयिष्यते । मृगयताम् । अमृगयत । मृगयेतु । मृगयिषीष्ट । अममृगत । अमृगयिष्यत ।

९१. शूर—विक्रान्तौ । आ. प. सेट् ।

दशलकारेषु—शूरयते । शूरयामासे-श्चक्रे । शूरयिता । शूरयिष्यते । शूरयताम् । अशूरयत । शूरयेत । शूरयिषीष्ट । अशुशूरत । अशूरयिष्यत ।

९२. वीर—विक्रान्तौ । आ. प. सेट् ।

दशलकारेषु—वीरयते । वीरयामासे-श्चक्रे । वीरयिता । वीरयिष्यते । वीरयताम् । अवीरयत । वीरयेत । वीरयिषीष्ट । अविवीरत । अवीरयिष्यत ।

९३. गर्व—माने । आ. प. सेट् ।

दशलकारेषु—गर्वयते । गर्वयामासे-श्चक्रे । गर्वयिता । गर्वयिष्यते । गर्वयताम् । अगर्वयत । गर्वयेत । गर्वयिषीष्ट । अजगर्वत । अगर्वयिष्यत ।

इति चुरादिगण प्रकरणम् ॥

# अथ णिजन्त प्रक्रिया

## १. भू—सत्तायाम् ।

लट्

| | | | |
|---|---|---|---|
| प्र० पु० | भावयति | भावयतः | भावयन्ति |
| म० ,, | भावयसि | भावयथः | भावयथ |
| उ० ,, | भावयामि | भावयावः | भावयामः |

लिट्

| | | | |
|---|---|---|---|
| प्र० पु० | भावयाञ्चकार | भावयाञ्चक्रतुः | भावयाञ्चक्रुः |
| म० ,, | भावयाञ्चकर्थ | भावयाञ्चक्रथुः | भावयाञ्चक्र |
| उ० ,, | भावयाञ्चकार-कर | भावयाञ्चकृव | भावयाञ्चकृम |

लुट्

| | | | |
|---|---|---|---|
| प्र० पु० | भावयिता | भावयितारौ | भावयितारः |
| म० ,, | भावयितासि | भावयितास्थः | भावयितास्थ |
| उ० ,, | भावयितास्मि | भावयितास्वः | भावयितास्मः |

लृट्

| | | | |
|---|---|---|---|
| प्र० पु० | भावयिष्यति | भावयिष्यतः | भावयिष्यन्ति |
| म० ,, | भावयिष्यसि | भावयिष्यथः | भावयिष्यथ |
| उ० ,, | भावयिष्यामि | भावयिष्यावः | भावयिष्यामः |

लोट्

| | | | |
|---|---|---|---|
| प्र० पु० | भावयतु | भावयताम् | भावयन्तु |
| म० ,, | भावय-तात् | भावयतम् | भावयत |
| उ० ,, | भावयानि | भावयाव | भावयाम |

लङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अभावयत् | अभावयताम् | अभावयन् |
| म० ,, | अभावयः | अभावयतम् | अभावयत |
| उ० ,, | अभावयम् | अभावयाव | अभावयाम |

वि. लिङ.

| | | | |
|---|---|---|---|
| प्र० पु० | भावयेत् | भावयेताम् | भावयेयुः |
| म० ,, | भावयेः | भावयेतम् | भावयेत |
| उ० ,, | भावयेयम् | भावयेव | भावयेम |

आशीर्लिङ्

| | | | |
|---|---|---|---|
| प्र० पु० | भाव्यात्[1] | भाव्यास्ताम् | भाव्यासुः |
| म० ,, | भाव्याः | भाव्यास्तम् | भाव्यास्त |
| उ० ,, | भाव्यासम् | भाव्यास्व | भाव्यास्म |

लुङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अबीभवत्[2] | अबीभवताम् | अबीभवन् |
| म० ,, | अबीभवः | अबीभवतम् | अबीभवत |
| उ० ,, | अबीभवम् | अबीभवाव | अबीभवाम |

लृङ्

| | | | |
|---|---|---|---|
| प्र० पु० | अभावयिष्यत् | अभावयिष्यताम् | अभावयिष्यन् |
| म० ,, | अभावयिष्यः | अभावयिष्यतम् | अभावयिष्यत |
| उ० ,, | अभावयिष्यम् | अभावयिष्याव | अभावयिष्याम |

1. "णेरनिटि" णिलोप।

2. अ भू अ त्, इति स्थितौ 'द्वित्वे कार्ये 'णावच आदेशस्य निषेधात्' पूर्वं द्वित्वे ततः णिलोपप्रत्ययलक्षणेनोत्तरखण्डे वृद्ध्यावादेशे "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वे, सन्वद्भावे, "ओः पुयण्ज्यपरे" इत्यनेनाभ्यासोकारस्येत्वे 'दीर्घो लघोः' इति दीर्घे 'अबीभवत्' इति रूपम्।

## २. पूञ्-पवने (क्र्यादि० उभ०)

दशलकारेषु—पावयति[1]। पावयाञ्चकार-मास-म्बभूव। पावयिता। पावयिष्यति। पावयतु। अपावयत्। पावयेत्। पाव्यात्। अपीपवत्। अपावयिष्यत्।

## ३. मूङ्-बन्धने (भ्वादि० आ०)

दशलकारेषु - मावयति। मावयाञ्चकार-मास-म्बभूव। मावयिता। मावयिष्यति। मावयतु। अमावयत्। मावयेत्। माव्यात्। अमीमवत्। अमावयिष्यत्।

## ४. यु—मिश्रणामिश्रणयोः (अदादि० प०)

दशलकारेषु—यावयति। यावयाञ्चकार-मास-म्बभूव। यावयिता। यावयिष्यति। यावयतु। अयावयत्। यावयेत्। याव्यात्। अयीयवत्। अयावयिष्यत्।

## ५. रु—शब्दे (अदादि०प०)

दशलकारेषु—रावयति[2]। रावयामास-ञ्चकार-म्बभूव। रावयिता। रावयिष्यति। रावयतु। अरावयत्। रावयेत्। राव्यात्। अरीरवत्। अरावयिष्यत्।

## ६. लूञ्-छेदने (क्र्यादि० प०)

दशलकारेषु—लावयति। लावयाञ्चकार-मास-म्बभूव। लावयिता। लावयिष्यति। लावयतु। अलावयत्। लावयेत्। लाव्यात्। अलीलवत्। अलावयिष्यत्।

---

1. देवदत्तः पुनाति यज्ञदत्तस्तं प्रेरयति-पावयति। सभी णयन्त धातुओं को 'णिचश्च' से कर्तृगामि क्रिया फल होते आत्मनेपद भी हो सकता है।

2. देवदत्तः रौति यज्ञदत्तस्तं प्रेरयति इति यज्ञदत्तो देवदत्तं रावयति। ध्यान रहे कि--अकर्मक धातु भी णयन्त में सकर्मक हो जाते हैं।

७. जु–गतौ (सौत्रो धातुः)

दशलकारेषु—जावयति । जावयामास-ञ्चकार-म्बभूव । जावयिता । जावयिष्यति । जावयतु । अजावयत् । जावयेत् । जाव्यात् । अजीजवत्[1], अजावयिष्यत् ।

८. स्रु–प्रसवणे (भ्वा० प०)

दशलकारेषु—स्रावयति[2] । स्रावयामास-ञ्चकार-म्बभूव । स्रावयिता । स्रावयिष्यति । स्रावयतु । अस्रावयत् । स्रावयेत् । स्राव्यात् । असिस्रवत्[3]-असुस्रवत् । अस्रावयिष्यत् ।

९. चुर्–स्तेये (चुरा० उभ०)

दशलकारेषु—चोरयति[4] । चोरयामास । चोरयिता । चोरयिष्यति । चोरयतु । अचोरयत् । चोरयेत् । चोर्यात् । अचूचुरत् । अचोरयिष्यत् ।

१०. टु ओ श्वि–गतिवृद्ध्योः (भ्वा० प०)

दशलकारेषु—श्वाययति । श्वाययमास । श्वाययिता । श्वाययिष्यति । श्वाययतु । अश्वाययत् । श्वाययेत् । श्वाय्यात् । अशूशवत्[5]-अशिश्वयत्[6] । अश्वाययिष्यत् ।

---

1 "ओः पुयण्ज्यपरे" अभ्यासोकार को इकार ।

2. जलं स्रवति, तत् प्रेरयति--स्रावयति ।

3. "स्रवति शृणोति द्रवति प्रवति प्लवति च्यवतीनां वा" से अभ्यासोकार को इकार । संयोगपरक होने से इकार दीर्घ है (लघु नहीं ) अतः "दीर्घो लघोः" से दीर्घ नहीं हुआ ।

4. णयन्त चोरि से प्रेरणार्थक णिच् , वृद्धि को बाध कर पूर्व विप्रतिषेध णिलोप (णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन)

5. "णौ च संश्चङोः" से सम्प्रसारण करके 'शु' को द्वित्व ।

6. सम्प्रसारणाभाव में 'श्वि' को द्वित्व, अभ्यास लघु न होने से दीर्घाभाव ।

### ११. स्तम्भु—रोधने (क्र्या० प०)

दशलकारेषु—स्तम्भयति । स्तम्भयामास-ञ्चकार-म्बभूव । स्तम्भयिता । स्तम्भयिष्यति । स्तम्भयतु । अस्तम्भयत् । स्तम्भयेत् । स्तम्भ्यात् । अतस्तम्भत्[1] । अस्तम्भयिष्यत् ।

### १२. षह्—मर्षणे (भ्वा० प०)

दशलकारेषु—साहयति । साहयामास-ञ्चकार-म्बभूव । साहयिता । साहयिष्यति । साहयतु । असाहयत् । साहयेत् । साह्यात् । असीषहत्[2] । असाहयिष्यत् ।

### १३ षिवु—तन्तु सन्ताने (दि० प०)

दशलकारेषु—सेवयति । सेवयाञ्चकार-मास-म्बभूव । सेवयिता । सेवयिष्यति । सेवयतु । असेवयत् । सेवयेत् ! सेव्यात् । असीषिवत्[3] । असेवयिष्यत् ।

### १४ ञिष्वप्—शये (अदा० पर०)

दशलकारेषु—स्वापयति । स्वापयामास-ञ्चकार-म्बभूव । स्वापयिता । स्वापयिष्यति । स्वापयतु । अस्वापयत् । स्वापयेत-स्वाप्यात् । असूषुपत्[4] । अस्वापयिष्यत् ।

---

1. 'अवातस्तम्भत्' में "अवाच्चालम्बनाविदूर्ययोः" से षत्व प्राप्त हुआ, "स्तम्भुसिवुसहां चङि" से निषेध ।

2. 'न्यसीषहत' में पूर्वसकार को "परिनिविभ्यः" से प्राप्तषत्व का स्तम्भुसिवुसहां चङि" से निषेध ।

3. पर्यसीषिवत्— 'स्तम्भुसिवु...'' से षत्वनिषेध ।

4. "स्वापेश्चङि" से सम्प्रसारण, पूर्वरूप, 'सुप्' को द्वित्व, सन्वद्भाव, दीर्घ ।

## १५ हन—हिंसागत्योः (अदा० पर०)

दशलकारेषु—घातयति[1] । घातयामास-ञ्चकार-म्बभूव । घातयिता । घातयिष्यति । घातयतु । अघातयत् । घातयेत् । घात्यात् । अजीघतत्[2] । अघातयिष्यत् ।

## १६ ष्ठा—गतिनिवृत्तौ (भ्वा० पर०)

दशलकारेषु—स्थापयति[3] । स्थापयामास-ञ्चकार-म्बभूव । स्थापयिता । स्थापयिष्यति । स्थापयतु । अस्थापयत् । स्थापयेत् । स्थाप्यात् । अतिष्ठिपत्[4] । अस्थापयिष्यत् ।

## १७ घ्रा—गन्धोपादाने (भ्वा० पर०)

दशलकारेषु—घ्रापयति[5] । घ्रापयामास-ञ्चकार-म्बभूव । घ्रापयिता । घ्रापयिष्यति । घ्रापयतु । अघ्रापयत् । घ्रापयेत् । घ्राप्यात् । अजिघ्रिपत्[6]-अजिघ्रपत् । अघ्रापयिष्यत् ।

## १८ शो—तनूकरणे (दिवा० पर०)

दशलकारेषु—शाययति । शाययामास-ञ्चकार-म्बभूव । शाययिता । शाययिष्यति । शाययतु । अशाययत् । शाययेत् । शाय्यात् । अशीशयत् । अशाययिष्यत् ।

---

1. हन्+इ, उपधावृद्धि, "हनस्तोऽचिण्णलोः" नकार को तकार, "हो हन्तेः..." से कुत्व ।

2. "अभ्यासाच्च" कुत्व ।

3. अर्तिह्रीव्लीरी..." से पुक् ।

4. "तिष्ठतेरित्" से उपधा को इकार, स्थिप् को द्वित्व ।

5. पुक् ।

6. जिघ्रतेर्वा" से उपधा को वैकल्पिक इत्, इत् के अभाव में केवल अभ्यास में इकार श्रवण होगा—अजिघ्रपत् ।

१९ ह्वेञ्—स्पर्धायाम् (भ्वादि० उभ०)

दशलकारेषु—ह्वाययति[1] । ह्वाययामास-ञ्चकार-म्बभूव । ह्वाययिता । ह्वाययिष्यति । ह्वाययतु । अह्वाययत् । ह्वाययेत् । ह्वाय्यात् । अजूहवत्[2]-अजुहावत् । अह्वायिष्यत् ।

२० पा—पाने (भ्वादि० पर०)

दशलकारेषु—पाययति[3] । पाययामास-ञ्चकार-म्बभूव । पाययिता । पाययिष्यति । पाययतु । अपाययत् । पाययेत् । पाय्यात् । अपीप्यत्[4] । अपाययिष्यत् ।

२१ पा—रक्षणे (अदा० पर०)

दशलकारेषु—पालयति[5] । पालयामास-ञ्चकार-म्बभूव । पालयिता । पालयिष्यति । पालयतु । अपालयत् । पालयेत् । पाल्यात् । अपीपलत् । अपालयिष्यत् ।

२२ वा—गतिगन्धनयोः (अदा० पर०)

दशलकारेषु—वाजयति[6] । वाजयामास-ञ्चकार-म्बभूव । वाजयिता ।

---

1. "आदेश उपदेशेऽशिति" से आकार करने के बाद पुक् को बाध कर "शाच्छासा.." से युक् ।

2. "ह्वः सम्प्रसारणम्" से सम्प्रसारण, 'हु' को द्वित्व, काण्यादिगणपठित होने से उपधा ह्रस्व का विकल्प, उपधाह्रस्व में अभ्यासलघु होने से दीर्घ, ह्रस्व भाव में लघुपरक अभ्यास न होने से सन्वद्भाव दीर्घ न हुए ।

3. युक् ।

4. "लोपः पिबते रीच्चाऽभ्यासस्य" से उपधा का लोप और अभ्यास को ईकार ।

5. "पाते र्णौ लुग्वक्तव्यः" लुक् आगम ।

6. "वोविधूनने जुक्" । अर्थान्तर में पुगागम होकर—वापयति । अवीवपत् इत्यादि रूप होंगे ।

वाजयिष्यति । वाजयतु । अवाजयत् । वाजयेत् । वाज्यात् अवीवजत् । अवाजयिष्यत् ।

२३ शद्लृ—विशरणगत्यवसादनेषु (भ्वादि० पर०)

दशलकारेषु—शातयति । शातयामास-ञ्चकार-म्बभूव । शातयिता । शातयिष्यति । शातयतु । अशातयत् । शातयेत् । शात्यात् । अशीशतत्[1] । अशातयिष्यत् ।

२४ रुह्—बीजजन्मनि प्रादुर्भावे च (भ्वादि० पर०)

दशलकारेषु—रोपयति[2] । रोपयामास-ञ्चकार-म्बभूव । रोपयिता । रोपयिष्यति । रोपयतु । अरोपयत् । रोपयेत् । रोप्यात् । अरूरुपत् । अरोपयिष्यत् ।

२५ दुष्—वैकृत्ये (भ्वादि० पर०)

दशलकारेषु—दूषयति । दूषयामास-ञ्चकार-म्बभूव । दूषयिता । दूषयिष्यति[3] । दूषयतु । अदूषयत् । दूषयेत् । दूष्यात् । अदूदुषत् । अदूषयिष्यत् ।

पक्षे—दोषयति । दोषयामास । दोषयिता । दोषयिष्यति । दोषयतु । अदोषयत् । दोषयेत् । दोष्यात् । अदूदुषत् ।

२६ अन—प्राणने (अदा० पर०)

दशलकारेषु—प्राणयति । प्राणयामास । प्राणयिता । प्राणयिष्यति । प्राणयतु । प्राणयत् । प्राणयेत् । प्राण्यात् ।

---

1. गतिभिन्न अर्थ में "शदेरगतौ तः" से तकारादेश । गत्यर्थ में—शादयति, अशीशदत् ।

2. "रुहः पोऽन्यतरस्याम्" से हकार को पकारादेश । पक्षे—रोहयति, अरूरुहत् ।

3. "दोषो णौ" से गुण को बाधकर उपधा को ऊकार ।

प्राणिणत्[1] । प्राणयिष्यत् ।

२७ इण्—गतौ (अदा० पर०)

दशलकारेषु—गमयति[2] । गमयामास-ञ्चकार-म्बभूव । गमयिता । गमयिष्यति । गमयतु । अगमयत् । गमयेत् । गम्यात् । अजीगमत् । अगमयिष्यत् ।

२८ घट—चेष्टायाम् (चुरा० पर०)

दशलकारेषु—घटयति । घटयामास-ञ्चकार-म्बभूव । घटयिता । घटयिष्यति । घटयतु । अघटयत् । घटयेत् । घट्यात् । अजीघटत् । अघटयिष्यत् ।

२९. ज्ञप—ज्ञाने, ज्ञापने च । सेट् ।

दशलकारेषु—ज्ञपयति[3] । ज्ञपयामास-ञ्चकार-म्बभूव । ज्ञपयिता । ज्ञपयिष्यति । ज्ञपयतु । अज्ञपयत् । ज्ञपयेत् । ज्ञप्यात् । अजिज्ञपत् । अज्ञपयिष्यत् ।

३०. रभ—राभस्ये ( भ्वा० आ० ) ।

दशलकारेषु—रम्भयति[4] । रम्भयामास । रम्भयिता । रम्भयिष्यति । रम्भयतु । अरम्भयत् । रम्भयेत् । रम्भ्यात् । अररम्भत् । अरम्भयिष्यत् ।

---

1. द्वितीय एकाच् 'नि' को द्वित्व । "उभौ साभ्यासस्य" दोनों लकारों को णत्व ।

2. "णौ गमिरबोधने" से गति अर्थ में इण् को गम् आदेश । "मितां ह्रस्वः" से उपधा को ह्रस्व । बोधन अर्थ में—प्रत्याययति, प्रत्यायियत् । बोधन अर्थ में 'अवगमयति' प्रयोग अवपूर्वक गम्लृ (गतौ) का समझना चाहिये ।

3. "मितां ह्रस्वः" ।

4. "रधिजभोरचि" नुम् ।

### ३१. डुलभष् - लाभे ( भ्वा० आ० )।

दशलकारेषु—लम्भयति[1] । लम्भयामास । लम्भयिता । लम्भयिष्यति । लम्भयतु । अलम्भयत् । लम्भयेत् । लम्भ्यात् । अललम्भत् । अलम्भयिष्यत् ।

### ३२. ईर्ष्य—ईर्ष्यायाम् ( भ्वा० पर० )।

दशलकारेषु—ईर्ष्ययति । ईर्ष्ययामास । ईर्ष्ययिता । ईर्ष्ययिष्यति । ईर्ष्ययतु । ऐर्ष्ययत् । ईर्ष्ययेत् । ईर्ष्यात् । ऐर्ष्यियत्[2]-ऐर्षिष्यत् । ऐर्ष्ययिष्यत् ।

### अथ ण्यन्त धातूनां तालिका

| धातु | लट् | लङ् |
|---|---|---|
| अट् | आटयति | आटिटत्[3] |
| अर्च् | अर्चयति | आर्चिचत् |
| अश | आशयति | आशिशत् |
| ऋ | अर्पयति[4] | आर्पिपत् |
| एध | एधयति | ऐदिधत् |
| कृत | कीर्तयति | अचीकृतत्-अचिकीर्तत् |
| गुह | गूहयति[5] | अजूगुहत् |
| चकास | चकासयति | अचीचकासत्-अचचकासत् |

---

1. "लभेश्च" नुम् । 2 "ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्" की व्याख्याभेद से 'यि' द्वित्व करने से 'ऐर्ष्यियत्' । 'ष्यि' को द्वित्व करने से अभ्यास में षकार श्रवण-ऐर्षिष्यत् ।

3. अजादि धातु के द्वितीय एकाच 'टि' को द्वित्व ।

4. "अर्तिह्रीव्ली—" से पुक् आगम, "पुगन्त" से उपधागुण ।

5. "ऊदुपधाया गोहः" ।

| धातु | लट् | लङ् |
|---|---|---|
| जन् | जनयति | अजीजनत् |
| जीव | जीवयति | अजीजिवत्-अजिजीवत् |
| त्वर | त्वरयति | अतत्वरत् |
| ज्वर | ज्वरयति | अजिज्वरत् |
| स्मृ | स्मारयति | असस्मरत् |
| दीप | दीपयति | अदीदिपत्-अदिदीपत् |
| दृ | दारयति | अददरत् |
| द्रु | द्रावयति | अदिद्रवत्-अदुद्रुवत् |
| नट | नटयति | अनीनटत् |
| पीड | पीडयति | अपीपिडत्-अपिपीडत् |
| पूज् | पावयति | अपीपवत् |
| प्रथ | प्रथयति | अपप्रथत् |
| भास | भासयति | अबीभसत्-अबभासत् |
| भी | भीषयते<br>भाययते<br>भाययति | अबीभिषत्<br>अबीभयत<br>अबीभयत् |
| भ्राज | भ्राजयति | अबिभ्रजत्-अबभ्राजत् |
| मृज | मार्जयति | अमीमृजत्-अममार्जत् |
| यम | यमयति | अयीयमत् |
| रञ्ज | रञ्जयति<br>रजयति | अररञ्जत्<br>अरीरजत् |
| वृत | वर्तयति | अवीवृतत्-अववर्तत् |
| श्रु | श्रावयति | अशिश्रवत्-अशुश्रवत् |
| कृ | कारयति | अचीकरत् |

| | | |
|---|---|---|
| शास | शासयति | अशशासत |
| ह्री | ह्रेपयति | अजिह्रिपत् |
| क्ष्मा | क्ष्मापयति | अचिक्ष्मपत् |
| स्तृ | स्तारयति | अतस्तरत |
| वेष्ट | वेष्टयति | अविवेष्टत्-अववेष्टत् |

इति ण्यन्तप्रक्रिया ।

# अथ सन्नन्तप्रक्रिया

१ पठ—व्यक्तायां वाचि (भ्वा० पर०)

दशलकारेषु—पिपठिषति[1] । पिपठिषाञ्चकार । पिपठिषिता । पिपठिषिष्यति । पिपठिषतु । अपिपठिषत् । पिपठिषेत् । पिपठिष्यात् । अपिपठिषीत् । अपिपठिषिष्यत् ।

२ अद—भक्षणे (अदा० पर०)

दशलकारेषु—जिघत्सति[2] । जिघत्साञ्चकार । जिघत्सिता । जिघत्सिष्यति । जिघत्सतु । अजिघत्सत् । जिघत्सेत् । जिघत्स्यात् । अजिघत्सीत् । अजिघत्सिष्यत् ।

३ डुकृञ्—करणे (तना० पर०)

दशलकारेषु चिकीर्षति[3] । चिकीर्षाञ्चकार । चिकीर्षिता । चिकीर्षिष्यति । चिकीर्षतु । अचिकीर्षत् । चिकीर्षेत् । चिकीर्ष्यात् । अचिकीर्षीत् । अचिकीर्षिष्यत् ।

४ हन्—हिंसागत्योः (अदा० पर०)

दशलकारेषु—जिघांसति । जिघांसाञ्चकार । जिघांसिता ।

---

1. पठ+स, द्वित्व, "सन्यतः" से इत्व, षत्व, 'पिपठिष्' की धातु संज्ञा हो कर लट्, तिप्, शप् । सन्नन्त होने के बाद सभी धातु अनेकाच् होने से सेट् होंगे ।

2. "लुङ्सनोर्घस्लृ" "सस्यार्धधातुके" ।

3. कृ+स्, "अज्झनगमां सनि" से दीर्घ, "इको झल्" से कित्वाद् गुणाभाव, "ऋत इद्धातोः" से इत्, रपर, किर्+स्, द्वित्व, "हलि च" से उपधादीर्घ ।

जिघांसिष्यति । जिघांसतु । अजिघांसत् । जिघांसेत् । जिघांस्यात् । अजिघांसीत् । अजिघांसिष्यत् ।

### ५ गम्लृ—गतौ (भ्वा० पर०)

दशलकारेषु—जिगमिषति[1] । जिगमिषाञ्चकार । जिगमिषिता । जिगमिषिष्यति । जिगमिषतु । अजिगमिषत् । जिगमिषेत् । जिगमिष्यात् । अजिगमिषीत् । अजिगमिषिष्यत् ।

### ६ इङ्—अध्ययने (अदा० आत्मने०)

दशलकारेषु—अधिजिगांसते[2] । अधिजिगांसाञ्चक्रे । अधिजिगांसिता । अधिजिगांसिष्यते । अधिजिगांसताम् । अध्यजिगांसत । अधिजिगांसेत । अधिजिगांसीत । अध्यजिगांसिष्ट । अध्यजिगांसिष्यत् ।

### ७ रुदिर—अश्रुविमोचने (अदा० पर०)

दशलकारेषु—रुरुदिषति[3] । रुरुदिषाञ्चकार । रुरुदिषिता । रुरुदिषिष्यति । रुरुदिषतु । अरुरुदिषत् । रुरुदिषेत् । रुरुदिष्यात् । अरुरुदिषीत् । अरुरुदिषिष्यत् ।

---

1. "सनिच" से गम् आदेश । बोधन अर्थ में प्रतीषिषति, प्रत्यैषिषीत् रूप होंगे ।

2. "इङश्च" गम् आदेश, द्वित्व, "अज्झनगमां सनि" से दीर्घ । "पूर्ववत्सनः"—यदि धातु आत्मनेपदी हो तो सन्नन्त होने पर भी आत्मनेपद होगा और यदि परस्मैपदी हो तो सन्नन्त होकर परस्मैपदी रहेगा ।

3. रोदितुम् इच्छति इति विग्रहः । रुद्+सन्, इट्, द्वित्व, "रुद विदमुषग्रहस्वपिप्रच्छः संश्च" से सन् के कित् होने से लघूपधगुण न हुआ । विद, मुष, ग्रह में भी सन् कित् होगा ।

८ विद्—ज्ञाने (अदा० पर०)

दशलकारेषु—विविदिषति । विविदिषाञ्चकार । विविदिषिता । विविदिषिष्यति । विविदिषतु । अविविदिषत् । विविदिषेत् । विविदिष्यात् । अविविदिषीत् । अविविदिषिष्यत् ।

मुष्—स्तेये (क्र्यादि० पर०)

दशलकारेषु—मुमुषिषति । मुमुषिषाञ्चकार । मुमुषिषिता । मुमुषिषिष्यति । मुमुषिषतु । अमुमुषिषत् । मुमुषिषेत् । मुमुषिष्यात् । अमुमुषिषीत् । अमुमुषिष्यत् ।

१० ग्रह्—उपादाने (क्र्यादि० उभ०)

दशलकारेषु—जिघृक्षति[1] । जिघृक्षाञ्चकार । जिघृक्षिता । जिघृक्षिष्यति । जिघृक्षतु । अजिघृक्षत् । जिघृक्षेत् । जिघृक्ष्यात् । अजिघृक्षीत् । अजिघृक्षिष्यत् ।

११ गुह्—सम्वरणे (भ्वादि० पर०)

दशलकारेषु—जुघुक्षति[2] । जुघुक्षाञ्चकार । जुघुक्षिता । जुघुक्षिष्यति । जुघुक्षतु । अजुघुक्षत् । जुघुक्षेत् । जुघुक्ष्यात् । अजुघुक्षीत् । अजुघुक्षिष्यत् ।

१२ ञिष्वप—शये (अदा० पर०)

दशलकारेषु—सुषुप्सति[3] । सुषुप्साञ्चकार । सुषुप्सिता । सुषुप्सिष्यति । सुषुप्सतु । असुषुप्सत् । सुषुप्सेत् । सुषुप्स्यात् ।

1. "हलन्ताच्च" से सन् कित् । ध्यान रहे कि—ग्रह गुह को "सनिग्रहगुहोश्च" से इट् का निषेध है ।

2. ग्रहीतुम् इच्छति । ग्रह | सन्, "रुदविद—से सन् कित्, "ग्रहिज्या..." से सम्प्रसारण, "होढः" "षढोःकःसि" षत्व ।

3. "रुद विद..." से सन्, कित् होने से "वचिस्वपि..." से सम्प्रसारण, लघूपधगुणाभाव ।

१३ प्रच्छ – ज्ञीप्सायाम् (तुदा० पर०)

दशलकारेषु—पिपृच्छिषति[1] । पिपृच्छिषाञ्चकार । पिपृच्छिषिता । पिपृच्छिषिष्यति । पिपृच्छिषतु । अपिपृच्छिषत्[2] । पिपृच्छिषेत् । पिपृच्छिष्यात् । अपिपृच्छिषीत् । अपिपृच्छिषिष्यत् ।

१४ कृ —विक्षेपे (तुदा० पर०)

दशलकारेषु—चिकरिषति[3] । चिकरिषाञ्चकार । चिकरिषिता । चिकरिषिष्यति । चिकरिषतु । अचिकरिषत् । चिकरिषेत् । चिकरिष्यात् । अचिकरिषीत् । अचिकरिषिष्यत् ।

१५ गृ—निगरणे (तुदा० पर०)

दशलकारेषु—जिगरिषति[4] । जिगरिषाञ्चकार । जिगरिषिता । जिगरिषिष्यति । जिगरिषतु । अजिगरिषत् । जिगरिषेत् । जिगरिष्यात् । अजिगरिषीत् । अजिगरिषिष्यत् ।

१६. दृङ्—आदरे (तुदा० आत्म०)

दशलकारेषु—दिदरिषते[5] । दिदरिषाञ्चक्रे । दिदरिषिता । दिदरिषिष्यते ।

असुपुप्सीत् असुपुप्सिष्यत ।

---

1. सन् कित् होने से "ग्रहिज्या .." से सम्प्रसारण ।

2. प्रच्छ धातु अनिट् है, सन् परे होने "किरश्च" पञ्चभ्यः" से इट् ।

3. कृ धातु को "सनिग्रहगुहोश्च" से इट्निषेध प्राप्त हुआ, "किरश्च-पंचभ्यः" से फिर इट् हुआ । "उरत्" 'सन्यतः' । यहां "वृतो वा" से इट् को दीर्घ इष्ट नहीं ।

4. कृ के समान सभी प्रक्रिया । "अचिविभाषा" से लत्वविकल्प हो कर 'जिगलिषति' इत्यादि रूप भी होंगे ।

5. "पूर्ववत्सनः" से आत्मनेपद । धातु अनिट् था, "किरश्चपञ्चभ्यः" से इट् ।

दिदरिषिताम् । अदिदरिषत । दिदरिषेत । दिदरिषिषीष्ट । अदिदरिषिष्ट। अदिदरिषिष्यत ।

१७. धृङ्—अवस्थाने (तुदा० आत्म०)

दशलकारेषु—दिधरिषते । दिधरिषाञ्चक्रे । दिधरिषिता। दिधरिषिष्यते। दिधरिषताम्। अदिधरिषत। दिधरिषेत। दिधरिषिषीष्ट। अदिधरिषिष्ट। अदिधरिषिष्यत।

१८. भू—सत्तायाम (भ्वादि० पर०)

दशलकारेषु—बुभूषति[1] । बुभूषाञ्चकार । बुभूषिता । बुभूषिष्यति। बुभूषतु। अबुभूषत्। बुभूषेत्। बुभूष्यात्। अबुभूषीत्। अबुभूषिष्यत्।

१९. दिवु—क्रीडायाम् (दिवा० पर०)

दशलकारेषु—दुद्यूषति[2]। दुद्यूषाञ्चकार । दुद्यूषिता। दुद्यूषिष्यति। दुद्यूषतु। अदुद्यूषत्। दुद्यूषेत्। दुद्यूष्यात् । अदुद्यूषीत्। अदुद्यूषिष्यत्।

२०. ष्टुञ्—स्तुतौ (अदा० उभ०)

दशलकारेषु – तुष्टूषति[3]। तुष्टूषाञ्चकार। तुष्टूषिता। तुष्टूषिष्यति। तुष्टूषतु। अतुष्टूषत्। तुष्टूषेत्। तुष्टूष्यात्। अतुष्टूषीत्। अतुष्टूषिष्यत्।

---

1. धातु सेट् है परन्तु "सनिग्रहगुहोश्च" से इट् निषेध, "इकोझल्" से सन् कित् होने से गुण न हुआ।

2. देवितुमिच्छति । दिव्+स, धातु तो सेट् है पर "सनीवन्तर्धभ्रस्ज···" से इट् विकल्प, "हलन्ताच्च" से कित्व, "च्छ्वोः शूडनुनासिके च" से वकार को ऊठ्, यण्, द्यू को द्वित्व। इट् करने पर 'दिदेविषति',

3. स्तोतुमिच्छति । स्तु+स, द्वित्व, "शर्पूर्वाःखयः" "इको झल्" से सन् कित् होने से गुणाभाव, "अज्झनगमां सनि" से दीर्घ, "स्तौतिण्योरेव षण्यभ्यासात्" के नियम से अभ्यासोत्तर षत्व।

## २१. ञिष्वप्—शये (ण्यन्त से सन्)

दशलकारेषु—सुष्वापयिषति[1]। सुष्वापयिषाञ्चकार। सुष्वापयिषिता। सुष्वापयिषिष्यति। सुष्वापयिषतु। असुष्वापयिषत्। सुष्वापयिषेत्। सुष्वापयिष्यात्। असुष्वापयिषीत्। असुष्वापयिषिष्यत्।

## २२. साध—संसिद्धौ (स्वादि० पर०)

दशलकारेषु—सिषाधयिषति[2]। सिषाधयिषाञ्चकार। सिषाधयिषिता। सिषाधयिषिष्यति। सिषाधयिषतु। असिषाधयिषत्। सिषाधयिषेत्। सिषाधयिष्यात्। असिषाधयिषीत्। असिषाधयिषिष्यत्।

## २३. षिवु—तन्तुसन्ताने (दि० पर०)

दशलकारेषु—सुस्यूषति[3]। सुस्यूषाञ्चकार। सुस्यूषिता। सुस्यूषिष्यति। सुस्यूषतु। असुस्यूषत्। सुस्यूषेत्। सुस्यूष्यात्। असुस्यूषीत्। असुस्यूषिष्यत्।

इट् करने पर—

सिसेविषति। सिसेविषाञ्चकार। सिसेविता इत्यादि।

## २४. आप्लृ—व्याप्तौ (स्वादि० उभ०)

दशलकारेषु—ईप्सति[4]। ईप्साञ्चकार। ईप्सिता। ईप्सिष्यति। ईप्सतु। ऐप्सत्। ईप्सेत्। ईप्स्यात्। ऐप्सीत्। ऐप्सिष्यत्।

---

1. स्वापयितुमिच्छति। ण्यन्त 'स्वापि' से सन्, 'स्वाप्' को द्वित्व, "स्वापेश्चङि"... "द्युतिस्वाप्योः सम्प्रसारणम्" से अभ्यास को सम्प्रसारण। "स्तौतिण्योः···" नियम से अभ्यासोत्तर षत्व।

2. साधयितुमिच्छति। "स्तौतिण्यो···" से षत्व।

3. "सनीवन्तर्ध···" से इट् विकल्प। "हलन्ताच्च" से सन् कित् "च्छ्वोः···" से ऊठ्, स्यू को द्वित्व।

4. आप्तुमिच्छति। "आप्ज्ञप्यृधामीत्" 'अप्स' को द्वित्व, "अत्र-लोपोऽभ्यासस्य"।

२५. ऋधु—वृद्धौ (दिवा० स्वादि० पर०)

दशलकारेषु—ईर्त्सति[1] । ईर्त्साञ्चकार । ईर्त्सिता । ईर्त्सिष्यति । ईर्त्सतु । ऐर्त्सत् । ईर्त्सेत् । ईर्त्स्यात् । ऐर्त्सीत् । ऐर्त्सिष्यत् ।

२६. भ्रस्ज्—पाके ( तुदा. पर. )

दशलकारेषु—बिभ्रज्जिषति[2]-बिभर्जिषति-बिभ्रक्षति[3] । बिभ्रज्जिषाञ्चकार-बिभर्जिषाञ्चकार-बिभ्रक्षाञ्चकार इत्यादि ।

२७. दम्भु—दम्भने । ( स्वादि. पर. )

दशलकारेषु—धिप्सति[4]-धीप्सति । धिप्साञ्चकार-धीप्साञ्चकार । धिप्सिता-धीप्सिता । धिप्सिष्यति-धीप्सिष्यति । धिप्सतु-धीप्सतु । अधिप्सत्-अधीप्सत् । धिप्सेत्-धीप्सेत् । धिप्स्यात्-धीप्स्यात । अधिप्सीत्-अधीप्सीत् । अधिप्सिष्यत्-अधीप्सिष्यत् ।

२८. श्रिञ्—सेवायाम् ( भ्वादि. उभ. )

दशलकारेषु—शिश्रीषति[5] । शिश्रीषाञ्चकार । शिश्रीषिता । शिश्रीषिष्यति । शिश्रीषतु । अशिश्रीषत् । शिश्रीषेत् । शिश्रीष्यात् । अशिश्रीषीत् । अशिश्रीषिष्यत् ।

---

1. अर्धितुमिच्छति । 'ईप्सति' के समान प्रक्रिया । इट् का विकल्प "सनीवन्तर्ध · ·" से इट् । इट् करने पर तो अर्दिधिषति ।

2. "सनीवन्तर्ध"—से इट् विकल्प । इट् कर के "भ्रस्जो रोपधयोः"—रम् आगम का विकल्प हो कर दो रूप ।

3. इट् के अभाव में रम् आगम विकल्प—बिभ्रक्षति, बिभर्क्षति दो रूप ।

4. "सनीवन्तर्ध"— इट् विकल्प, "दम्भ इच्च" । इट् हो कर 'दिदम्भिषति' इत्यादि रूप भी होंगे ।

5. "सनीवन्तर्ध"—से इट् विकल्प । "इको झल्" से कित्व होकर गुण नहीं होगा । इट् होकर—शिश्रयिषति ।

२९. स्वृ—शब्दोपतापयोः ( भ्वादि. पर. )

दशलकारेषु—सुस्वूर्षति[1]। सुस्वूर्षाञ्चकार। सुस्वूर्षिता। सुस्वूर्षिष्यति। सुस्वूर्षतु। असुस्वूर्षत्। सुस्वूर्षेत्। सुस्वूर्ष्यात्। असुस्वूर्षीत्। असुस्वूर्षिष्यत्।

३०. यु—मिश्रणामिश्रणयोः ( अदा. पर. )

दशलकारेषु—युयूषति[2]। युयूषाञ्चकार। युयूषिता। युयूषिष्यति। युयूषतु। अयुयूषत्। युयूषेत्। युयूष्यात्। अयुयूषीत्। अयुयूषिष्यत्।

३१. ऊर्णुञ्—आच्छादने ( अदा. उभ. )

दशलकारेषु— ऊर्णुनूषति[3]-ऊर्णुनुविषति-ऊर्णुनविषति। ऊर्णुनूषाञ्चकार-ऊर्णुनुविषाञ्चकार-ऊर्णुनविषाञ्चकार। लङ्—और्णुनूषत्, और्णुनविषत्-और्णुनुविषत्। लुङ्—और्णुनूषीत्-और्णुनुविषीत्-और्णुनविषीत्। इत्यादि।

३२. डुभृञ्—धारणपोषणयोः ( जु. पर )

दशलकारेषु—बुभूर्षति[4]। बुभूर्षाञ्चकार। बुभूर्षिता। बुभूर्षिष्यति। बुभूर्षतु। अबुभूर्षत्। बुभूर्षेत्। बुभूर्ष्यात्। अबुभूर्षीत्। अबुभूर्षिष्यत्।

३३. ज्ञप—ज्ञाने ( चुरा. पर. )

दशलकारेषु—ज्ञीप्सति[5]। ज्ञीप्साञ्चकार। ज्ञीप्सिता। ज्ञीप्सिष्यति।

---

1. "सनीवन्तर्ध"—इट् विकल्प। "उदोष्ठ्य पूर्वस्य"। इट् में सिस्वरिषति।

2. इट् करने पर—यियविषति।

3. "सनीवन्तर्ध—से इट् विकल्प "इको झल्" "अज्झनगमां सनि"। इट् करने पर "विभाषोर्णोः" से ङित्व विकल्प।

4. "सनीवन्तर्ध"—से इट विकल्प। इट् में-बिभरिषति।

5. ज्ञपितुमिच्छति। "सनीवन्तर्ध"—से इट् विकल्प, "आप् ज्ञप्यृधामीत्" से आकार को ईकार, 'ज्ञी' को द्वित्व, "अत्र लोपोऽभ्यासस्य" लोप। इट् पक्ष में जिज्ञपिषति।

ज्ञीप्सतु । अज्ञीप्सत् । ज्ञीप्सेत् । ज्ञीप्स्यात् । अज्ञीप्सीत् । अज्ञीप्सिष्यत् ।

३५. षण—सम्भक्तौ ( भ्वादि. पर )

दशलकारेषु—सिषासति[1] । सिषासाञ्चकार । सिषासिता । सिषासिष्यति । सिषासतु । असिषासत् । सिषासेत् । सिषास्यात् । असिषासीत् । असिषासिष्यत् ।

३६. मृङ्—प्राण परित्यागे ( तुदा. आत्म )

दशलकारेषु—मुमूर्षति[2] । मुमूर्षाञ्चकार । मुमूर्षिता । मुमूर्षिष्यति । मुमूर्षतु । अमुमूर्षत् । मुमूर्षेत् । मुमूर्ष्यात् । अमुमूर्षीत् । अमुमूर्षिष्यत् ।

३६. तनु—विस्तारे ( तना. उभ. )

दशलकारेषु—तितांसति[3]-तितंसति । तितांसाञ्चकार-तितंसाञ्चकार । तितांसिता-तितंसिता । तितांसिष्यति-तितंसिष्यति । तितांसतु-तितंसतु । अतितांसत्-अतितंसत् । तितांसेत्-तितंसेत् । तितांस्यात्-तितंस्यात् । अतितांसत्-अतितंसत् । तितांसेत्-तितंसेत् । तितांस्यात्-तितंस्यात् । अतितांसीत्-अतितंसीत् । अतितांसिष्यत्-अतितंसिष्यत् ।

३७. पत्लृ—पतने ( भ्वा. पर. )

दशलकारेषु—पित्सति[4] । पित्साञ्चकार । पित्सिता । पित्सिष्यति ।

1. "सनीवन्तर्ध"—से इट् विकल्प, इट् के अभाव में "जन सन—खनां सञ्झलोः" से नकार को आकार, इट् के अभाव में सिसनिषति" ।

2. आशंका में सन् है । 'मरणाशंका विषयो भवति' विग्रह होगा, न कि—मर्तुमिच्छति । "उदोष्ठ्य पूर्वस्य" "हलि च" ।

3. "तनिपतिदरिद्रातिभ्यः सनो वेड् वाच्यः" । इट् के अभाव में "तनोतेर्विभाषा" से उपधादीर्घ का विकल्प । इट् में—तितनिषति ।

4. यहां भी आशंका में सन् समझो । पत्—स "सनिमीमाघुरभ"—से अकार को इस्, पि स् त स्, 'पिस्' को द्वित्व, अभ्यास लोप, "हलन्ताच्च" से कित्व, "स्कोः—" से सलोप । इट् करके-पिपतिषति ।

पित्सतु । अपित्सत् । पित्सेत् । पित्स्यात् । अपित्सीत् । अपित्सिष्यत् ।

### ३८. दरिद्रा—दुर्गतौ ( अदा. पर. )

दशलकारेषु—दिदरिद्रासति[1] दिदरिद्रासाञ्चकार। दिदरिद्रासिता । दिदरिद्रासिष्यति । दिदरिद्रासतु । अदरिद्रासत् । दिदरिद्रासेत् । दिदरिद्रास्यात् । अदरिद्रासीत् । अदरिद्रासिष्यत् ।

### ३६. मुच्लृ—मोचने ( तुदा० उभ० ) ।

दशलकारेषु—मुमुक्षति[2] । मुमुक्षाञ्चकार । मुमुक्षिता । मुमुक्षिष्यति । मुमुक्षतु । अमुमुक्षत् । मुमुक्षेत् । मुमुक्ष्यात् । अमुमुक्षीत् । अमुमुक्षिष्यत् ।

### ४०. वृङ्—संभक्तौ ( क्र्यादि० आत्म० ) ।

दशलकारेषु—विवरि-रीषते[3] । विवरि-रीषाञ्चक्रे । विवरि-रीषिता । विवरि-रीषिष्यते । विवरि-रीषताम् । अविवरि-रीषत । विवरि-रीषेत । विवरि-रीषिषीष्ट । अविवरिरीषिष्ट । अविवरि-रीषिष्यत ।

**पक्षे इट् के अभाव में**

वुवूर्षते । वुवूर्षाञ्चक्रे । वुवूर्षिता । वुवूर्षिष्यते । वुवूर्षताम् । अवुवूर्षत । वुवूर्षेत । वुवूर्षिषीष्ट । अवुवूर्षिष्ट । अवुवूर्षिष्यत् ।

---

1. "तनिपति दरिद्रातिभ्यः सनो वेट् वाच्यः" । इट् करके "आतो लोप इटि च"—दिदरिद्रिषति ।

2. मोक्तु मिच्छति ( वत्सम् ) । "हलन्ताच्च" से सन् कित् होने से गुणाभाव । यदि कर्मकर्तरि प्रयोग में ( मोक्षते वत्सः स्वयमेव ) अकर्मक होने से "मुचोऽकर्मकस्य गुणो वा" से विकल्प से गुण होगा, वहां गुण हो कर अभ्यासलोप होकर मोक्षते रूप होगा । जहां गुण न होगा वहां अभ्यासलोप न होकर --'मुमुक्षते' रूप होगा ।

3. "इट् सनिवा" से इट् विकल्प, "वृतो वा" से दीर्घ विकल्प ।

४१. वृञ्—वरणे ( स्वा० उभ० )।

विवरिषति-ते[1], वुवूर्षति-ते इत्यादि ।

४२. तॄ—प्लवनतरणयोः ( भ्वा० पर० )।

दशलकारेषु—तितरि-रीषति । तितरि-रीषाञ्चकार । तितरि-रीषिता । तितरि-रीषिष्यति । तितरि-रीषतु । अतितरि-रीषत् । तितरि-रीषेत् । तितरि-रीष्यात् । अतितरि-रीषीत् । अतितरि-रीषिष्यत् ।

इट् के अभाव में

तितीर्षति[2] । तितीर्षाञ्चकार । तितीर्षिता । तितीर्षिष्यति । तितीर्षतु । अतितीर्षत् । तितीर्षेत् । तितीर्ष्यात् । अतितीर्षीत् । अतितीर्षिष्यत् ।

४३. ष्मिङ्—ईषद्धसने ( भ्वा० आत्म० )।

दशलकारेषु—सिस्मयिषते[3] । सिस्मयिषाञ्चक्रे[4] । सिस्मयिषिता । सिस्मयिषिष्यते । सिस्मयिषताम् । असिस्मयिषत । सिस्मयिषेत । सिस्मयिषिषीष्ट[5] । असिस्मयिषिष्ट । असिस्मयिषिष्यत ।

४४. पूङ्—पवने ( भ्वा० आत्म० )।

दशलकारेषु—पिपविषते[6] । पिपविषाञ्चक्रे । पिपविषिता । पिपवि-

1. ञित् होने से उभयपद । इट् विकल्प का ध्यान, रखें ।

2. इट् अभाव में "इको झल्" से कित् होकर गुणाभाव, "ॠत इद्धातोः" "हलि च" । विग्रह-तरीतुमिच्छति ।

3. ङित्वात् आत्मनेपद ( पूर्ववत्सनः )। स्मिङ् धातु अनिट् है, पर "स्मिपूङ् रञ्ज्वशां सनि" से इट् हुआ ।

4. "स्तौतिण्योरेव षण्यभ्यासात्" के नियम से अभ्यासोत्तर षत्व न होगा ।

5. 'सनि ग्रह गुहोश्च" के इट् निषेध को बाध कर "स्मिपूङ्-रञ्ज्वशां सनि" से इट् ।

पिष्यते । पिपविपताम् । अपिपविपत । पिपविपेत । पिपविषिषीष्ट । अपिपवि-
पिष्ट । अपिपविपिष्यत ।

४५. ऋ—गतौ ( क्र्या० पर० ) ।

दशलकारेषु—अरिरिपति[1] । अरिरिपाञ्चकार । अरिरिपिता । अरिरि-
पिष्यति । अरिरिपतु । आरिरिपत् । अरिरिपेत् । अरिरिष्यात् । आरिरिपीत् ।
आरिरिपिष्यत् ।

४६. अञ्जू—व्यक्तिम्रक्षणकान्तिगतिषु ( रुधा० पर० )

दशलकारेषु—अञ्जिजिपति । अञ्जिजिपाञ्चकार । अञ्जिजिपिता ।
अञ्जिजिपिष्यति । अञ्जिजिपतु । आञ्जिजिपत् । अञ्जिजिपेत् । अञ्जिजिष्यात् ।
आञ्जिजिपीत् । आञ्जिजिपिष्यत् ।

४७. अश्—भोजने ( क्र्या० पर० ) ।

दशलकारेषु – अशिशिपति । अशिशिपाञ्चकार । अशिशिपिता ।
अशिशिपिष्यति । अशिशिपतु । अशिशिपत् । अशिशिपेत् । अशिशिष्यात् ।
आशिशिपीत् । आशिशिपिष्यत् ।

४८. गुप् ( सन्नन्तो निन्दार्थकः ) ।

दशलकारेषु—जुगुप्सते[2] । जुगुप्साञ्चक्रे । जुगुप्सिता । जुगुप्सिष्यते ।
जुगुप्सताम् । अजुगुप्सत । जुगुप्सेत । जुगुप्सिषीष्ट । अजुगुप्सिष्ट । अजुगु-
प्सिष्यत ।

---

1. स्मिपूङ्—'' से इट्, गुण, 'रि' को द्वित्व ।

2. गुप्, तिज्, कित्, मान्, बध्, शान्, से जो अर्थ विशेष में सन्
किया है वह 'धातोः' अधिकार में नहीं, अतः एव उस की आर्धधातुक संज्ञा
न होने से इन धातुओं को इट् न होगा । हां, सन्नन्त जुगुप्स आदि को तो
आर्धधातुक में इट् होगा ही ।

४९. तिज—क्षमायाम् ।

दशलकारेषु—तितिक्षते[1] । तितिक्षाञ्चक्रे । तितिक्षिता । तितिक्षिष्यते । तितिक्षताम् । अतितिक्षत । तितिक्षेत । तितिक्षिषीष्ट । अतितिक्षिष्ट । अतितिक्षिष्यत ।

५० कित्—व्याधिप्रतीकारे । पर० ।

दशलकारेषु—चिकित्सति । चिकित्साञ्चकार । चिकित्सिता । चिकित्सिष्यति । चिकित्सतु । अचिकित्सत् । चिकित्सेत् । चिकित्स्यात् । अचिकित्सीत् । अचिकित्सिष्यत् ।

५१ मान—पूजायाम् (सन्नन्ते जिज्ञासायाम्) आत्म० ।

दशलकारेषु—मीमांसते[2] । मीमांसाञ्चक्रे । मीमांसिता । मीमांसिष्यते । मीमांसताम् । अमीमांसत । मीमांसेत । मीमांसिषीष्ट । अमीमांसिष्ट । अमीमांसिष्यत ।

५२ बध—बन्धने (सन्नन्ते चित्तविकारे) आत्म० ।

दशलकारेषु—बीभत्सते । बीभत्साञ्चक्रे । बीभत्सिता । बीभत्सिष्यते । बीभत्सताम् । अबीभत्सत । बीभत्सेत । बीभत्सिषीष्ट । अबीभत्सिष्ट । अबीभत्सिष्यत ।

५३ दान—खण्डने (सन्नन्ते आर्जवे) उभ० ।

दशलकारेषु—दीदांसति-दीदांसते । दीदांसाञ्चकार-दीदांसाञ्चक्रे । दीदांसितासि-से । दीदांसिष्यति-ते । दीदांसतु-ताम् । अदीदांसत्-त । दीदांसेत्-त । दीदांस्यात्-दीदांसिषीष्ट । अदीदांसीत्-अदीदांसिष्ट । अदीदांसिष्यत्-त ।

५४ शान—तेजने (सन्नन्ते निशाने) उभ० ।

दशलकारेषु—शीशांसति-ते । शीशांसाञ्चकार-ञ्चक्रे । शीशांसितासि से

---

1. तितिक्षते, चिकित्सते में "हलन्ताच्च" से सन् कित् होने से गुणाभाव ।

2. "मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य" ।

शीशांसिष्यति-ते । शीशांसतु-ताम् । अशीशांसत्-त । शीशांसेत्-त ।
शीशांस्यात्-शीशांसिषीष्ट । अशीशांसीत्-अशीशांसिष्ट । अशीशांसिष्यत्-त ।

## अथ सन्नन्तधातूनां तालिका

| धातु | लट् | लिट् | आ० लिङ् | लुङ् |
|---|---|---|---|---|
| डुकृञ् | चिकीर्षति | चिकीर्षाञ्चकार | चिकीर्ष्यात् | अचिकीर्षीत् |
| ग्रह | जिघृक्षति | जिघृक्षाञ्चकार | जिघृक्ष्यात् | अजिघृक्षीत् |
| चिञ् | चिकीषति[1] | चिकीषाञ्चकार | चिकीष्यात् | अचिकीषीत् |
| दह् | दिधक्षति | दिधक्षाञ्चकार | दिधक्ष्यात् | अदिधक्षीत् |
| डुधाञ् | धित्सति[2] | धित्साञ्चकार | धित्स्यात् | अधित्सीत् |
| नृत् | निनर्तिषति[3] | निनर्तिषाञ्चकार | निनर्तिष्यात् | अनिनर्तिषीत् |
| मा | मित्सति | मित्साञ्चकार | मित्स्यात् | अमित्सीत् |
| यज् | यियक्षति[4] | यियक्षाञ्चकार | यियक्ष्यात् | अयियक्षीत् |
| दृश् | दिदृक्षते[5] | दिदृक्षाञ्चक्रे | दिदृक्षिषीष्ट | अदिदृक्षिष्ट |
| लभ | लिप्सते | लिप्साञ्चक्रे | लिप्सीष्ट | अलिप्सिष्ट |
| रम् | रिरंसते | रिरंसाञ्चक्रे | रिरंसीष्ट | अरिरंसिष्ट |
| वृत | विवर्तिषते[6] | विवर्तिषाञ्चक्रे | विवर्तिषिषीष्ट | अविवर्तिषिष्ट |
| ष्ठा | तिष्ठासति | तिष्ठासाञ्चकार | तिष्ठास्यात् | अतिष्ठासीत् |

1. चिचीषति भी रूप होगा ।
2. धित्सते रूप भी होगा।
3. निनृत्सति रूप भी होता है ।
4. यियक्षते रूप भी होगा ।
5. "ज्ञाश्रुस्मृदृशां सनः" से आत्मनेपद ।
6. 'विवृत्सति' परस्मैपद अनिट् रूप ।

